# कुसुमाञ्जलिप्रकरणम्।

न्यायाचार्य्यपदाङ्कितमहामहोपाध्याय-

श्रीमदुदयनाचार्य्यविरचितम्।

महामहोपाध्यायरुचिदत्तकृतमकरन्दोद्भासित-

महामहोपाध्यायवर्द्धमानकृतप्रकाशसमेतम्।

महामहोपाध्याय-

श्रीचन्द्रकान्ततर्कालङ्कारपरिशोधितम्।

कलिकातामहानगर्य्यां

व्याप्‌टिष्टमिसन्‌यन्त्रे मुद्रितम्।

शकाब्दाः १८०९.

# कुसुमाञ्जलौ ।

## प्रथमः स्तवकः ।

श्रीगणेशाय नमः ।

सत्पक्षप्रसरः सतां परिमलप्रोद्बोधबद्धोत्सवो-
विम्लानो न विमर्द्दनेऽमृतरसप्रस्यन्दमाध्वीकभूः ।
ईशस्यैष निवेशितः पदयुगे भृङ्गायमाणं भ्रम-
च्चेतो मे रमयत्वविघ्नमनघोन्यायप्रसूनाञ्जलिः ॥ १ ॥

---

## कुसुमाञ्जलिप्रकाशः ।

ॐ नमोगणेशाय ॥

भक्तानां कामदस्तुष्टोरुषा कामं दहन्नपि ।
अपि ज्ञानमयः स्थाणुर्यस्तमीशं स्तुवीमहि(१) ॥ १ ॥
यतः प्रकाशते ज्योतिरपि वाचामगोचरः ।
कायेन मनसा वाचा परां वाचं नमामि ताम् ॥ २ ॥

---

(१) कामं कन्दर्पं, कामदः अभिलषितफलदः । स्थाणुः स्थिरः काष्ठविशेषश्च । वृक्षादेर्ज्ञानसंबन्धेऽपि काष्ठविशेषस्य न तथात्वमिति भावः । अथवा, "ज्ञानमयइति व्याप्तौ मयट् । भगवतोज्ञानस्य व्याप्यवृत्तित्वात्"—इति मकरन्दः ।

न्यायाम्भोजपतङ्गाय मीमांसापारदृश्वने * ।
गङ्गेश्वराय गुरवे पित्रेऽत्रभवते नमः(१) ॥ २ ॥

सदाचारानुमितश्रुतिबोधितकर्त्तव्यताकं प्रारिप्सितप्रतिबन्धकविघ्नविघातकमिष्टदेवताकीर्त्तनरूपं सच्छब्दप्रयोगरूपञ्च(२) मङ्गलमाचरन्नेव प्रयोजनाभिधेयसंबन्धानाह सत्यचेति। एषोऽनघोवाक्यदोषरहितः(३), विषयाशुद्धेः पूर्वार्द्धेनैव निरासात्। नीयते प्राप्यते विवचितार्थसिद्धिरनेनेति न्यायः समस्तरूपोपपन्नलिङ्गबोधकवाक्य-

* मीमांसापारदर्शिने,—इति स० पुस्तके पाठः।

(१ यद्यपि तत्त्वचिन्तामणिकृद्गङ्गेशोपाध्यायोऽस्य पिता प्रसिद्धिस्त्वेवम्, तथापि गङ्गेश्वरइत्यपि तस्य नामान्तरमिति मन्तव्यम्। अतएव तत्त्वचिन्तामणौ तत्र तत्रावान्तरप्रकरणसमाप्तौ क्वचित् "गङ्गेशविरचिते"—इति, क्वचिच्च "गङ्गेश्वरविरचिते"—इति लिखितम्। अथवा "आत्मनाम गुरोर्नाम नामातिकृपणस्य च। श्रेयस्कामोन गृह्णीयात् ज्येष्ठापत्यकलत्रयोः"—इति गुरुनामग्रहणनिषेधात् गङ्गेश्वरपदेन गङ्गेशेति नाम्नोऽर्थतोऽनुवादः कृतइति ध्येयम्।

(२) कीर्त्तनं तद्गोचरशाब्दज्ञानजनकशब्दोच्चारणम्। तच्चेशशब्दोच्चारणमेव। प्रयोगस्च तद्गोचरशाब्दज्ञानाजनकतदर्थकशब्दोच्चारणम्। सच्छब्दोच्चारणमेव तथा। सच्छब्दस्य ब्रह्मार्थकत्वेऽपि प्रकृते तस्यार्थान्तरे प्रयुक्ततया तद्गोचरशाब्दज्ञानाजनकत्वादिति भावः।

(३) वाक्येति स्वरूपनिर्व्वचनम्। तथाच दोषराहित्यमात्रमत्र विवक्षितम्। तत्र दोषोद्विविधोवाक्यस्य अर्थगतोवाक्यगतस्च। तत्र पूर्व्वार्द्धश्लोकेनाद्ये निरस्तेऽप्यन्तोन लभ्यते इत्यर्थः—इति मकरन्दः।

जातं(१), सएवाह्लादकतया प्रसूनम्, तदेवावान्तरवाक्यघटितत्वेना-ञ्जलिः(२), मम चेतोऽविघ्नं यथा स्यादेवं रमयतु दुःखसामग्रीहीनं *

* दुःखसामग्रीरहितं,—इति स० पुस्तके पाठः।

(१) रूपाणि गमकतौपयिकानि। तानि च पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वासत्प्रतिपक्षितत्वाबाधितसाध्यकत्वानि पञ्चैव। सिषाधयिषाविरहविशिष्टसिद्ध्यभावोयत्र, स पक्षः। निश्चितसाध्यवान् सपक्षः। निश्चितसाध्याभाववान् विपक्षः। सत्प्रतिपक्षबाधितसाध्यकत्वे तु "विरुद्धयोः परामर्शे हेत्वोः सत्प्रतिपक्षता, साध्यशून्योयत्र पक्षस्त्वसौ बाधउदाहृतः"—इत्युक्तलक्षणे। "नचैवं समस्तेत्यादिना विषयशुद्धेरपि लब्धत्वात् पूर्व्वार्द्धवैयर्थ्यं, तत्त्वेन बोधकस्याभावसाधारणस्य विवक्षितत्वात्"—इति मकरन्दः। न्यायघटकवाक्यानि च प्रतिज्ञाहेतूदाहरणोपनयनिगमनरूपाणि पञ्चैव। तानि च "साध्यनिर्देशः प्रतिज्ञा, उदाहरणसाधर्म्म्यात् साध्यसाधनं हेतुः, तथा वैधर्म्म्यात्, साध्यसाधर्म्म्यात् तद्धर्म्मभावी दृष्टान्त उदाहरणम्, तद्विपर्य्ययाद्वा विपरीतम्, उदाहरणसापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः, हेत्वपदेशात् प्रतिज्ञायाः पुनर्व्वचनं निगमनम्,"—इति न्यायसूत्रेषु दर्शितानि। यथा शब्दोऽनित्यइति प्रतिज्ञा। उत्पत्तिधर्म्मकत्वादिति हेतुः। यत् उत्पत्तिधर्म्मकं तदनित्यं दृष्टं स्थाल्यादि इति साध्यधर्म्म्यात्ते हेतौ, यदनुत्पत्तिधर्म्मकं तन्नित्यं दृष्टमात्मादि इति च वैधर्म्म्यात्ते हेतौ उदाहरणम्। स्थाल्यादि द्रव्यमुत्पत्तिधर्म्मकमनित्यं दृष्टं तथाच शब्दइति साधर्म्म्यात्ते हेतौ, आत्मादिद्रव्यमनुत्पत्तिधर्म्मकं नित्यं दृष्टं न च तथा शब्दइति च वैधर्म्म्यात्ते हेतौ उपनयः। तस्मादुत्पत्तिधर्म्मकत्वादनित्यः शब्दइति निगमनम्।

(२) "अवान्तरघटितत्वमात्रं प्रयोजकं वाक्येति प्रकृताभिप्रायं, विशिष्टस्य प्रसूनाञ्जलावभावात्"—इति मकरन्दः।

करोतु। ईश्वरस्य पदयुगे रमयतु तदेकाग्रं करोतु इति वा। मनः कीदृशम्? भृङ्गायमाणं, भृङ्गइव मकरन्दे संसारिणां दुःखविगमोपाये सतृष्णम्। भ्रमदनुसरत्, दुःखविगमोपायमित्यर्थात्। तत्र सतृष्णस्य तदन्यानुसरणानौचित्यात्, तत्साधनानुसरणस्यापि तदर्थतया तदनुसरणरूपत्वात्। परदुःखं दृष्ट्वा दुःखितस्य कारुणिकस्य तन्निदानोच्छेदे तृष्णा भवत्येवेत्यनुभवसिद्धम्। यद्वा, मम चेतोरमयतु सफलयतु, परोपकारकरणात्, भृङ्गायमाणमुपकारलुब्धं, भ्रमत् दुःखितमुपकर्तुं व्याप्रियमाणमित्यर्थः। तथापि भूयसोधूमादिविषयस्य न्यायस्य सत्त्वात् * किमनेनेत्यतआह, ईश्वरस्य पदयुगे, पद्यते ज्ञायतेऽनेनेति व्युत्पत्त्या प्रत्यायकयुगे प्रमाणतर्करूपे(१) निवेशितस्तद्विषये उत्पादितः †। अन्वयि व्यतिरेकि वा पदयुगं(२), वेदस्य पौरुषेयत्वे केवलस्य व्यतिरेकिणोऽपि ‡ दर्शयिष्यमाणत्वात्। यद्वा, पदं ज्ञानं

* धूमादिविषयस्य सत्वात्,—इति स० पुस्तके पाठः।

† तद्विषयतया उपपादितः,—इति स० पुस्तके पाठः।

‡ केवलव्यतिरेकिणोपि—इति स० पुस्तके पाठः।

(१) प्रमाकरणं प्रमाणं प्रकृतेऽनुमानरूपम्। तर्कश्च व्याप्यारोपाद्व्यापकारोपरूपोऽनुमानसहकारी।

(२) "ननु तर्कविषये न न्यायइत्यरुचेराह अन्वयीति"—इति मकरन्दः। लिङ्गं त्रिविधं केवलान्वयि केवलव्यतिरेकि अन्वयव्यतिरेकि च। तत्रासद्विपक्षं केवलान्वयि। असत्सपक्षं केवलव्यतिरेकि। विद्यमानसपक्षविपक्षमन्वयव्यतिरेकि।

तद्युगं तदुभयोत्पादितं, निमित्तसप्तम्या(१) ज्ञानद्वयार्थमित्यर्थः । न तु शब्दानुप्रमाणान्तरव्युत्पादनस्याप्यत्र तदर्थत्वादिति भावः । न तु शब्दानुमानरूपं पदयुगमत्र विवक्षितं, 'श्रुतौहि'—इत्यादिना तदतीतत्वोपदर्शनविरोधात्, ग्रन्थे च* शब्दोपदर्शनस्यानुमाने तदविरोधमात्रप्रदर्शनतात्पर्य्यकत्वात्† ।

अनघत्वं न्यायानामुपपादयन्नाह सत्पक्षेति । सति प्रामाणिके, पक्षे सिषाधयिषितसाध्यधर्म्मके धर्म्मिणि, प्रकर्षेण सरोज्ञानं यस्मात्(२) । अनेनाश्रयासिद्धिबाधसिद्धसाधनस्वरूपासिद्धिभागासिद्धयोनिरस्ताः । तर्कपक्षे, सन् निर्दोषः पक्षप्रसरः पक्षव्यापकोऽनिष्टप्रसञ्जनरूपस्तर्कौ यस्मात् । सतां परामर्शकुशलानां परितः सपक्षे सत्तया विपक्षे

* ग्रन्थे च,—इति नास्ति का० पुस्तके ।
† तदविरोधमात्रप्रदर्शनात्,—इति स० पुस्तके पाठः ।

(१) "न च, कर्म्मयोगाभावान्नेयं सप्तमी साधुरिति वाच्यं निवेशिता-निवेशनां प्रापितइत्यन्तर्भूतकर्म्मतया तद्योगवशादुपपत्तेरित्याहुः"—इति मकरन्दः ।

(२) "प्रामाणिके इति पक्षतावच्छेदकवतीत्यर्थः । तेन विशेषणासिध्या असिद्धिः परिहृता, अन्यथा अव्यावर्त्तकतापत्तेः, अप्रामाणिकपक्षतायाश्चानघपदादेव व्यावृत्तेः । प्राचीनमतेनेदमित्यन्ये । सिद्धसाधनवारणाय सिषाधयिषितेति । सिषाधयिषितं साध्यं धर्म्मीयस्येति बाधव्युदासः । धर्म्मिणि हेतुभूतधर्म्मवतीति स्वरूपासिद्धिव्युदासः । प्रकर्षेण व्याप्त्या, तेन भागासिद्धिव्युदासः । ज्ञानं हेतोरित्यर्थात्"—इति मकरन्दः । पक्षतावच्छेदकसामाधिकरण्येन हेत्वभावोभागासिद्धिः । प्रकर्षेण व्याप्येति, व्याप्त्या व्यापनेन पक्षतावच्छेदकावच्छेदेनेत्यर्थः । अतएव भागासिद्धिव्युदासइति ध्येयम् ।

चासत्तया योमलः संवन्धोव्याप्तिरूपः, तस्य यः प्रोद्बोधोऽबाधित-प्रतिबन्धनिश्चयः साध्यसाधनयोः साध्याभावसाधनाभावयोर्वा, आपाद्यापादकयोश्च, तेन बद्धः स्थिरीकृतः उत्सवआनन्दोयेन, स तथा। नित्यसापेक्षत्वादसमर्थेऽपि समासः(१)। तेनान्वयव्यतिरेकिणि सपक्षासपक्षयोः सत्त्वासत्त्वे, केवलव्यतिरेकिणि च विपक्षासत्त्वं दर्शितमिति व्याप्यत्वासिद्धिसव्यभिचारविरुद्धनिरासः। विमर्दनं तद्विषयीभूतप्रमाणविरोधिप्रमाण* प्रदर्शनम्। तेन न विम्लानो न कार्य्यासम-इति सत्प्रतिपक्षविरहोदर्शितः।

ननु, तथाविधप्रमाणव्युत्पादनं न स्वतः प्रयोजनं,(२), प्रयोजनवत्सन्निधावश्रवणाच्च न तदङ्गमित्यतआह अमृतेति। अमृतं मोक्षः, तत्र रसइच्छा, रस्यमानममृतमिति यावत्। "कृदभिहितोभावोद्रव्यवत् प्रकाशते"—इति न्यायात्। तस्य प्रस्यन्दोऽसंवद्धसंवन्धोपहिता† क्रिया,

* प्रमाण,—इति नास्ति का॰ पुस्तके।

† प्रस्यन्दः संवन्धोपहिता,—इति स॰ पुस्तके पाठः।

(१) सतामित्यस्य प्रोद्बोधपदेनान्वयात् सापेक्षत्वम्। "समर्थे समासात सापेक्षमसमर्थं भवतीति यद्यपि सापेक्षे न समासः, तथापि नित्यसापेक्षे तदनिषेधादस्य च तथात्वादनिषेधः"—इति मकरन्दः। नित्यसापेक्षत्वञ्च प्रतियोगिपदसापेक्षत्वं कारकपदसापेक्षत्वञ्च। तदुक्तम्। "प्रतियोगिपदादन्यत् यदन्यत् कारकादपि। वृत्तिशब्दैकदेशार्थे न तस्यान्वयइष्यते"—इति।

(२) "यमर्थमधिकृत्य प्रवर्त्तते तत् प्रयोजनम्"—इति न्यायसूत्रम्। स्वतः प्रयोजनत्वञ्चान्येच्छानधीनेच्छाविषयत्वं प्रयोजनान्तराजनकत्वे सति प्रयोजनत्वं वा।

उत्पत्तिरिति यावत्(१)। तदेव माध्वीकं मधु, तस्य भूरुत्पत्तिस्थानम्। रसपदेन स्वरूपतदूष्यमाणतां दर्शयता, दुःखाभावोऽपि नावेद्यः पुरुषार्थइति निरस्तम्। माध्वीकपदेन चोत्कटेच्छाविषयत्वं दर्शयता, सुखहानावपि तुल्यायव्ययतया नायमपुरुषार्थइति दर्शितम्। अमृतं मोक्षः, तस्य रसइच्छा, तस्य प्रस्यन्दः प्रवाहउत्तरोत्तरानुवृत्तिः, सएव माध्वीकं, तस्य भूरुत्पत्तिस्थानम्,—इति तु न व्याख्यानम्। मोक्षेच्छायाः पूर्वं मोक्षज्ञानादेव संजातत्वात्, उत्तरोत्तरानुवृत्तेरपि उत्तरोत्तरज्ञानसाध्यत्वात्। एतावता मोक्षजनकेश्वरविषयानुमितिकरणलिङ्गपरामर्शविषयलिङ्गप्रतिपादनद्वारा मोक्षानुकूलत्वमस्य दर्शितम्।

अथच, न्यायइव* प्रसूनाञ्जलिरञ्जलिस्थानि कुसुमानि(२)। तत्रानघत्वं न्यायोपात्तत्वमपर्य्युषितत्वादि च। रूपकपक्षेऽपि न साधर्म्यं विना तत्(३) इति तदुभयसाधर्म्यमाह सत्पक्षेति। "पक्षि व्यक्तीकरणे"—

---

* न्याय एव,—इति का० पुस्तके पाठः।

---

(१) असंवद्धेति आद्यन्तयोर्नेत्यर्थः। इहापि छदभिहितइति न्यायात् प्रस्यन्दमानेत्यर्थः। तेन तस्य माध्वीकपदादुत्कटेच्छाविषयत्वमिति नाग्रिमग्रन्थविरोधः। अन्यथोत्पत्तेरुत्कटेच्छाविषयत्वप्रदर्शनप्राप्तौ तद्विरुध्यते इत्यवधेयम्,—इति मकरन्दः।

(२) तथाचाञ्जलेः प्रसूनमिति समासाश्रयणादञ्जलिशब्दस्य राजदन्तादित्वात् परनिपातः। संयुक्तकरद्वयात्मकाञ्जलेर्माध्वीकोत्पत्तिस्थानत्वासम्भवादिति भावः।

(३) "उपमैव तिरोभूतभेदा रूपकमुच्यते"—इत्युक्तेः रूपकसमासाश्रयणेऽपि साधर्म्यमपेक्षितमिति भावः। तच्चात्र शब्दज्ञतमिति बोध्यम्।

इति धात्वनुसारात् पचप्रन्दोदत्तवचनः। सत्पचाणां प्रसरोयच, सता पच्चेणानुकूलेन रविकिरणादिना विकाशोयस्येति वा। तेन, हस्तादिना कलिकाप्रकाशोनिषिद्धः। यद्वा, सत्पचप्रसरः सदनुकूल-विकाशः। सतां सुकृतिनामनुपहतघ्राणानां, परिमलः सौरभविशेषः, तस्य यः प्रोद्बोधः प्रकृष्टज्ञानं, तेन बद्धः स्थिरीकृतभत्सबोधेन, स तथा। विमर्द्दने करपुटसम्पर्के न विम्लानोनान्यथाभूतसंस्थानः। अमृतप्रायोरसः, तं प्रस्यन्दते इति प्रस्यन्दः, कर्म्मण्यण्। अमृत-रसप्रस्यन्दएव माध्वीकं, तस्य भूरुत्पत्तिस्थानम्। यद्वा, अमृतमिव रसोयस्य, प्रस्यन्दते इति प्रस्यन्दः, अनयोः कर्म्मधारयः।

ननु, कर्म्मसु विद्यमानेषु जन्मानुच्छेदात्, तेषां चाभुक्तानामक्षयात् भोगेन च तद्धेतुना[१] पुनः कर्म्मान्तरार्जनात्* काशेषगुणोच्छेदोमोक्षः। नापीश्वरे प्रमाणव्युत्पादनस्य मोक्षहेतुत्वे मानमिति तन्निष्फलम्। किञ्च, ईश्वरमननस्य मोक्षहेतुत्वे मानाभावः, "आत्मावाअरे श्रोतव्योमन्तव्योनिदिध्यासितव्यः साक्षात्कर्त्तव्यः"— इति श्रुतौ सामानाधिकरण्यात् यद्विषयकः साक्षात्कारोमोक्षजनकस्तद्विषयकं† मननं मोक्षहेतुः, साक्षात्कारस्य न जीवात्ममाक्ष-

---

* कर्म्मान्तरजननात्,—इति स० ह० पुस्तकयोः पाठः।

† यद्विषयकः साक्षात्कारस्तद्विषयकं,—इति का० पुस्तके पाठः।

---

(१) नानुपभुज्य भूतान्युपभोगः सम्भवतीति भावः। व्यक्तमिदं पातञ्जले। अन्यत्राप्युक्तम्। "कुर्व्वते कर्म्म भोगाय कर्म्म कर्त्तुं च भुञ्जते"— इति। यथा कीट इवावर्तादावर्तान्तरमाशु ते ॥ व्रजन्तो जन्म जन्म लभन्ते नैव निर्वृतिम्। सत्कर्मपरिपाकात्ते करुणानिधितो द्रुतम् ॥२॥ प्राप्यतीरतरुच्छायां विश्राम्यन्ति सुखमिति शेषं पञ्चदशी।

**स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः ।**
**यदुपास्तिमसावत्र परमात्मा निरूप्यते ॥ २ ॥**

गोचरो न वेश्वरविषयकस्तथा, मिथ्याज्ञानध्वंसद्वारा ह्यस्य तद्धेतुत्वं, न च जीवात्ममात्रगोचरमीश्वरगोचरं वा मिथ्याज्ञानं संसारहेतुः येन तदुच्छेदस्तद्द्वारं स्यात्, किन्तु स्वात्मगोचरं मिथ्याज्ञानमिति तत्तत्त्वसाक्षात्कारएव मोक्षहेतुरित्यतआह स्वर्गेति ।

स्वर्गयोरुत्कटरागगोचरयोरपवर्गयोरपरपरयोर्मुक्त्योर्मार्गमुपाय-मित्यर्थः[1]। तथाच, परापरमुक्त्योरेकानुष्ठानसाध्यतां दर्शयता, जीव-न्मुक्तिसहिता परममुक्तिः साध्येति दर्शितम्। तेन च, न प्रवृत्तिः तिसन्धानाय हीनक्लेशस्य[2] देहिनहत्यपूर्वकर्म्मोपार्ज्जनशङ्का निरस्ता। ई... रमननञ्च न तद्गोचरं प्रमाणमव्युत्पाद्य शक्यं व्युत्पादयितुमिति तद्बोधकप्रमाणव्युत्पादनमपि * मोक्षहेतुः। प्रमाणव्युत्पादने च तत-एव मननसिद्धौ न मननपर्य्यन्तं ग्रन्थव्यापारः, धूमोऽस्तीति वाक्यस्य यथा † वह्निविषयानुमितिपर्य्यन्तव्यापारत्वमिति। ईश्वरमननाङ्ग-

* तद्द्वारा प्रमाणव्युत्पादनमपि,—इति ह० पुस्तके पाठः।

† वाक्यस्यैव,—इति ह० पुस्तके पाठः।

(१) अपरा मुक्तिर्जीवन्मुक्तिः परा मुक्तिर्न्निर्व्वाणम्। अनयोरुत्कटराग-गोचरत्वं च उत्कटद्वेषविषयदुःखासम्भिन्नत्वेन।

(२) प्रवृत्तिः कर्म्मानुष्ठानं, प्रतिसन्धानं बन्धः। क्लेशोऽत्र मिथ्याज्ञानम्।

तया * तत्प्रमाणव्युत्पादनमपि प्रयोजनवदिति सूचितम्। ईश्वर-मननञ्च मोक्षहेतुः, "तमेव विदित्वाऽतिमृत्युमेति"—इति श्रुत्या स्वात्मज्ञानस्येवेश्वरज्ञानस्यापि[१] तद्धेतुत्वप्रतिपादनात्,[२] "द्वे ब्रह्मणी वेदितव्ये"—इत्यत्र[३]वेदनमात्रस्याकाङ्क्षितत्वेन प्रकृतत्वात् "श्रोतव्यो-मन्तव्यः"—इत्यादेरन्वयाच्च। ईश्वरमननञ्च यद्यपि मिथ्याज्ञानो-न्मूलनद्वारा नोपयोगि, तथापि स्वात्मसाक्षात्कारएवोपयुज्यते। यदाहुः "स हि तत्त्वतोज्ञातः स्वात्मसाक्षात्कारस्योपकरोति"—इति। यद्वा[४], श्रुत्या तद्धेतुत्वे प्रमापिते तदनुपपत्त्याऽदृष्टमेव तद्द्वारं कल्प्यते। केचित्तु मोक्षस्याच प्रस्तुतत्वात् स्वर्गपदं मुख्यमेव दृष्टा-न्तार्थमुपात्तमित्याहुः[५]। उपास्तीत्यत्र "व्यासश्रन्थोश्च"—इति

---

* ईश्वरानुमानाङ्गतया,—इति का० पुस्तके पाठः।

---

(१) प्रकरणादीश्वरस्यैव तत्पदादुपस्थितेरिति भावः।

(२) ननूक्तयुक्त्या ईश्वरज्ञानस्य मुक्तिहेतुत्वेनायोग्यतया तदपरामृष्ट स्वात्मैव तत्पदेन परामृश्यते इति यदि ब्रूयात्, तत्राह द्वे इति,—इति मकरन्दः।

(३) एतावतापि मननं नायातमित्यतआह वेदनमात्रस्येति। वेदनसामान्यस्येत्यर्थः।

(४) अनुपदमात्मसाक्षात्कारानुत्पत्तेरदृष्टद्वारा तद्धेतुत्वं तस्य वाच्यम्, एवञ्च तद्द्वारा मुक्तावेव हेतुत्वमस्तु लाघवात्, तदुपकारस्य तत्सहकारितयाप्युपपद्यते इत्यरुचेराह यद्वेति, तथाच मुक्तावेवात्मद्वयसाक्षात्कारोहेतुरित्यर्थः,—इति मकरन्दः।

(५) उक्तबाधकान्मुक्त्यसम्भवइत्याशङ्कायां नैवं समाधानमित्यस्वरसोऽवबोध्यः,—इति मकरन्दः।

युज् न भवति, "क्वचिदपवादविषयेऽप्युत्सर्गः प्रवर्त्तते"—इति न्यायात् बहुलवचनाद्वा। यद्वा, धातुनिर्द्देशे श्तिपोऽयं प्रयोगः। तस्य च धातुरूपशब्दाभिधायकत्वेऽप्यर्थे द्विरेफपदवल्लक्षणा(१)॥

---

। रूप।

(१) ननु श्तिपस्तत्र न लक्षणा तस्य प्रकृतिस्वार्थपरत्वतात्पर्य्यग्राहकत्वमात्रेणोपपत्तावुपसर्गवदशक्तत्वात्। किञ्च तस्यार्थशक्तौ हि किं लक्षणया, शब्दशक्तत्वे तस्योपासपदादेव स्वलक्षणया लाभे तत्र तस्य शक्यकल्पनात्। अन्यथा पौनरुक्त्यापत्तेः। तत्तद्धातुसमभिव्याहारे तत्तदनन्तशक्त्यापत्तेश्च। नचोपासपदएव लक्षणा तस्योपासनाख्यार्थशक्तत्वादेव, प्रत्युत स्वलक्षणाऽभ्युपगमादिति चेत्। अत्राहुः। उपास्तीत्यादिना उपासधातुरित्यादिप्रत्ययात् धातुत्वेन धातौ श्तिपः शक्तिः। तदिदमुक्तं, धातुरूपशब्दाभिधायकत्वेऽपीति। तथाच न शक्त्यानन्त्यादिदोषः। अन्यथा धातुत्वप्रकारकप्रत्ययानुपपत्तेः। न च धातुत्वं नानुगतमिति वाच्यं क्रियावाचित्वस्य तथात्वात्। नचैवं यागपाकादावपि प्रयोगापत्तिः, केवलस्यासाधुत्वात्। धातुसमभिव्याहारे च तत्तद्धात्वन्वयबोधनियमेन तदप्रतिपादकत्वात्। अतएव परमते कार्य्यत्वं लिङः प्रवृत्तिनिमित्तम्। अस्तु वा, क्रियावाचित्वे धर्म्ममात्र एव शक्तिः, धर्म्मिणः प्रकृतिलभ्यत्वात्। एवञ्च प्रकृतिप्रत्ययाभ्यां स्वलक्षणया शक्त्या च उपासधातुरिति विशिष्टानुभवे जनिते स्वज्ञाप्यधातुत्वविशिष्टोपाससंबन्धिनि उपासनारूपेऽर्थे गभीरनदीतीरे नदीपदस्येव श्तिप्पदे लक्षणा, ज्ञाप्यसंबन्धमात्रस्य लक्षणात्वात्। एते धातुशक्तत्वे लक्षणया धात्वर्थमात्रलाभः स्यान्न तूपासनाख्यार्थलाभइति निरस्तम्। नचैवमेकलक्षणैव न तु लक्षितलक्षणेति द्विरेफपददृष्टान्तोपादानमसङ्गतमिति वाच्यं शब्दोपस्थापकस्यार्थेलक्षणेत्यत्र दृष्टान्तात्। किञ्च द्विरेफपदेऽप्येकलक्षणैव परम्परासंब-

शक्त्या नन्त्यपवारणायेति भावः ४

इह यद्यपि यं कमपि पुरुषार्थमर्थयमानाः, शुद्धबुद्ध-स्वभावइत्यौपनिषदाः, आदिविद्वान् सिद्धइति का-

---

भगवदुपासना फलवती, निरूपणञ्च क्रियते, इत्यसङ्गतिं(१) परि-हरन् वादिनां विप्रतिपत्त्यभावेन न्यायाङ्गं संशयमाक्षिपति इहेति। इह विचारे, सन्देहएव न्यायपूर्वाङ्गं कुतः। अत्र हेतुः, प्रसिद्धानु-भावे। अनुभावेऽसाधारणीं कारणतामाह यं कमपीति। यं कमपि मोक्षादिकं स्वाभिमतं पुरुषार्थमर्थयमानाः यमीश्वरमुपासते मनन-विषयीकुर्वन्तीत्यौपनिषदाइत्यादौ सर्वत्र संबन्धः। शुद्धएकोद्वितीय-भावात्। बुद्धः स्वप्रकाशज्ञानात्मकः, द्वितीयाभावेन परप्रकाश्य

---

त्वेनार्थोपस्थापिका। यदि च भ्रमरपदं लक्षयित्वाऽर्थोलक्ष्यते इति लक्षणाद्वयं, तदा प्रकृतेपि उपासपदं लक्षयित्वैवार्थोलक्ष्यते इति तुल्यम्। इयांस्तु विशेषः, यत्तत्रैकमेवोभयलक्षकमत्र तु न तथेति। न हि सर्व्वप्रकारेण दृष्टान्तत्वमसम्भवात्। नचान्यपदार्थोपस्थितभ्रमर-पदार्थोपस्थितिसम्भवे द्विरेफपदे कथमर्थलक्षणेति वाच्यं तथात्वे द्वि-रेफपदोत्तरविभक्त्यर्थस्य तत्रानन्वयापत्तेरिति दिक्,—इति मक-रन्दः। वस्तुतस्तु "आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते" "य-जतिचोदना द्रव्यदेवताक्रियम्" "ईक्षतेर्नाशब्दम्" इत्यादिबहुलप्रयो-गदर्शनात् भावेऽपि क्तिपोविधानं बाहुलकादिति युक्तमुत्पश्यामः।

(१) भगवदुपासनायाः फलवत्त्वे सैव कर्त्तुमुचिता, न तु भगवन्निरूपणा-मिति भावः।

स्वातुपपत्तेः । एतदुभयं[१] वेदान्तिसाधारणम्* । आदीति आदौ प्रथमतोविद्वांश्चिद्रूपः, स्वभावतश्चेतनो न तु प्रकृतिवच्चेतनोपरागादौपाधिकं चैतन्यं तस्येत्यर्थः । सिद्धोनित्यो न तु बुद्ध्यादिवत् साध्यः† । तेन कूटस्थनित्यो न तु प्रकृतिवत् परिणामिनित्यइत्यर्थः[२] । एतच्च सकलवेदान्तसाधारणत्वान्न परमात्मोत्कर्षाभिधायकमित्यन्यथा व्याख्येयम् । आदौ सर्गादौ विद्वान्, सिद्धोयोगर्द्धिसम्पदुत्यादिताष्टविधैश्वर्य्यसम्पद्युक्तइत्यर्थः[३] । यथोक्तं तत्त्वकौमुद्यां वाचस्पतिमिश्रैः,

---

* वेदान्तसाधारणम्,—इति सो० पुस्तके, वेदान्तानुसारिणाम्,—इति का० पुस्तके पाठः ।

† सिद्धोनतु बुद्ध्यादिवत्साध्यः,—इति का० सो० पुस्तकयोः पाठः ।

---

(१) चिदखिण्डमतमेकदखिण्डमतञ्चेत्युभयमिति मकरन्दः ।

(२) कूटस्थः "कूटवन्निर्व्विकारेण स्थितः कूटस्थउच्यते"—इत्युक्तलक्षणः, जन्यधर्मानाश्रयोवा । अवस्थितस्य द्रव्यस्य पूर्व्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिः परिणामः । यस्मिन् परिणम्यमाने तदेवेदमिति बुद्धि र्न व्याहन्यते, तत् परिणामि नित्यम् ।

(३) अष्टविधैश्वर्य्यञ्च "अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा । ईशित्वञ्च वशित्वञ्च यत्रकामावसायिता"—इत्युक्तलक्षणम् । अणिमादीनि विवृतानि योगभाष्ये । "तत्राणिमा भवत्यणुः । लघिमा लघुर्भवति । महिमा महान् भवति । प्राप्तिरङ्गुल्यग्रेणापि स्पृशति चन्द्रमसम् । प्राकाम्यमिच्छानभिघातः, भूमावुन्मज्जति निमज्जति यथोदके । वशित्वं भूतभौतिकेषु वशीभवत्यवश्यश्चान्येषाम् । ईशितृत्वं तेषां प्रभवाप्ययव्यूहानामीष्टे । यत्रकामावसायित्वं सत्यसङ्कल्पता, यथा सङ्कल्पस्तथा भूतप्रकृतीनामवस्थानम्"—इति ।

पिलः, क्लेशकर्म्मविपाकाशयैरपरामृष्टो निर्म्माणकाय-मधिष्ठाय संप्रदायप्रद्योतको* ऽनुग्राहकश्चेति पात-

"सर्गादावादिविद्वाननुभवन् कपिलोमहामुनिधर्म्मज्ञानैश्वर्य्यसम्पन्नः प्रादुर्वभूवेति स्मरन्ति"—इति। क्लेशेति अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशाः, कर्म्म धर्म्माधर्म्महेतुर्भावनासाध्यं यागहिंसादि, विपाकोजात्यायुर्भोगाः, फलपर्य्यन्तमाशेरतइत्याशयाधर्म्माधर्म्माः, तैरपरामृष्टोऽसंवद्धइत्यर्थः(१)। शरीरैकनिष्पाद्यवेदादिनिर्म्माणार्थं(२) कायो-निर्म्माणकायः। सम्प्रदीयते गुरुणा शिष्यायेति सम्प्रदायो वेदः। स चानादिरेव भगवता द्योत्यते। भगवतस्वादृष्टाभावेऽपि तच्छरीर-

* प्रवर्त्तको,—इति आदर्शपुस्तके।

(१) अविद्या मिथ्याज्ञानं, अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिः। "बुद्धात्मनोरेकत्वेन ज्ञानमस्मितेत्येके, अहङ्कारइत्यन्ये"—इति मकरन्दः। अभिनिवेशोमरणभयम्। यद्यपि तन्मते क्लेशादीनामन्तःकरणधर्म्मत्वात् क्षेत्रज्ञानामपि तदपरामृष्टत्वमस्त्येव, तथापि अन्तःकरणवर्त्तिभिरपि क्लेशादिभिः क्षेत्रज्ञाः परामृश्यते। योह्यन्तःकरणवर्त्तिभिरपि क्लेशादिभिर्न परामृश्यते स भगवानीश्वर-इति व्यक्तं योगभाष्ये।

(२) वेदे निष्पाद्यत्वमुच्चार्य्यत्वं न तूत्पाद्यत्वं, स चेत्यग्रिमग्रन्थविरोधात्,—इति मकरन्दः।

ज्ञत्ताः, लोकवेदविरुद्धैरपि निर्लेपः स्वतन्त्रश्चेति महा-
पाशुपताः, शिवइति शैवाः, पुरुषोत्तमइति वैष्णवाः,

साध्यघटादिजन्यभोगजनकास्मदाद्यदृष्टैरेव तन्निष्पाद्यते। अनुग्राहको-घटादिनिर्म्माणे, शिवाद्वारेत्यर्थः। लोकेति लोकविरुद्धैः सर्प-दहन-धारणादिभिः, वेदविरुद्धैर्दारुवनद्विजवधू* विध्वंसनैरुपलक्षितः(१)। इत्थम्भूतलक्षणे तृतीया। सोऽयमित्थम्भूतोऽपि निर्लेपः, पापरूपलेप-रहितइत्यर्थः। करणे वा तृतीया। वेदविरुद्धहेतुक-भोगजनक-विशेषगुणरहितइत्यर्थः। (२) स च सुखं दुःखं धर्म्माधर्म्मौ चेति। मिथ्या-ज्ञानसलिलावसिक्तायामात्मभूमौ कर्म्मवीजं धर्म्माधर्म्माङ्कुरमारभते, न तु तत्त्वज्ञाननिदाघनिपीतसलिलतयोषरायामिति भावः। स्वतन्त्रो-जगत्कर्त्ता। शिवोनिस्त्रैगुण्यः। (३) पुरुषेषूत्तमः सर्व्वज्ञत्वात्। पिता-

* वेदविरुद्धैर्देवदारुवनद्विजवर,—इति शे॰ पुस्तके पाठः।

(१) लेपशब्दस्य पापपरत्वे तृतीयायाः करणार्थत्वमयुक्तं लोकविरुद्धहेतुक-लेपाप्रसिद्धेरित्यतआह उपलक्षितइति,—इति मकरन्दः।

(२) लेपपदे दुःखसाधारणतया व्याख्याते लोकविरुद्धकरणकलेपत्वं दुःखएव प्रसिद्धमित्याह सचेति,—इति मकरन्दः।

(३) कर्मधारये उत्तमपदस्य विशेषणपदतया पूर्वनिपातापत्तिः, षष्ठी-समासः 'न निर्धारणे'—इति निषिद्धएवेति सप्तमीसमासमालम्बते पुरुषेष्विति। यद्यपि षष्ठीसप्तम्योरभेदात् सोऽपि निषिद्धएव, अन्यथा तत्र तत्समासेनैवोपपत्तौ षष्ठीसमासनिषेधवैयर्थ्यापत्तेः, तथापि निर्धारणस्याविवक्षायामयं समासइति भावः। वस्तुतो जातिगुण-

सर्वज्ञ इति बौद्धाः



पितामह इति पौराणिकाः, यज्ञपुरुष इति याज्ञिकाः, निरावरण इति दिगम्बराः, उपास्यत्वेन देशित इति मीमांसकाः, यावदुक्तोपपन्न इति नैयायिकाः, लोक-

---

महोजनकस्यापि जनकः। यज्ञे प्रधानमिज्यं यज्ञपुरुषः। सर्व्वज्ञः क्षणिकसर्व्वज्ञः। निरावरण इति आवरणमदृष्टमविद्या स्वकर्म्मोपार्ज्जितञ्च शरीरमस्य नास्तीत्यर्थः। उपास्यत्वेनेति वेदोपदिष्टोपास्यभावः कश्चिन्मन्त्रादिरित्यर्थः(१)। लोकेति यथा लोके व्यवह्रियते चतुर्भुजाद्युपेतदेहवान् न तद्दृश्य इत्यर्थः। यावदुक्तेति यावदुक्तेषु यदुपपन्नं युक्तिमत् सर्व्वज्ञत्वादि, तेनोपपन्नः सम्पन्न इति मध्यपदलोपी समासस्तत्पुरुषः। यावदुक्तेषूपपन्नः प्रामाणिको धर्म्मो यस्येति वञ्जव्रीहिर्व्वा। न तु यावद्भिरुक्तैरुपपन्नः सहित इत्यर्थः, अद्वैताद्यनङ्गीकारेण* यावद्यथाव्याख्यातार्थस्य नैयायिकैरनङ्गीकारात्। यद्वा,

---

* अद्वैतानङ्गीकारेण,—इति सो० पुस्तके पाठः।

---

क्रियाभिः समुदायादेकस्य पृथक्करणं निर्धारणम्। यथा नराणां क्षत्रियः शूरतम इत्यत्र। तच्चात्र नास्तीति न निषेधः। तथा च समुदायसमुदायिवाचकपदयोः समासनिषेधस्यैव तत्सूत्रार्थत्वान्न निर्धारणप्रयोजकगुणादिविशेषवाचिपदसमासनिषेधोऽपीति तात्पर्य्यम्। एवञ्च षष्ठीसमासेऽप्यदोष इत्यवधेयम्,—इति मकरन्दः।

(१) मन्त्रा एवोपास्यास्त एव च देवताः न तु विग्रहवन्त इन्द्रादयः सन्ति इति मीमांसकमतम्। विग्रहवदिन्द्राद्यभावश्च मीमांसाभाष्ये महता संरम्भेन प्रतिपादितः। केषाञ्चिन्मीमांसकानां विग्रहवद्देवताभ्युपगमादग्न्याद्युपासनाविधानाच्च मन्त्रादिरित्यादिपदम्।

व्यवहारसिद्ध इति चार्वाकाः, किं बहुना, कारवोऽपि यं विश्वकर्म्मेत्युपासते, तस्मिन्नेवं जातिगोत्रप्रवरचरण-कुलधर्म्मादिवदासंसारं प्रसिद्धानुभावे* भगवति भवे सन्देह एव कुतः किं निरूपणीयम्, तथापि,—

---

सन्देह एव कुत इत्युपसंहारात् सर्व्वाण्येव दर्शनान्येकार्थपरतया[१] व्याख्यायन्ते। शुद्धो दोषहीनः, बुद्धस्वभावो घटादिभिन्नत्वे सत्यौ-पाधिकचैतन्यरहितः[२], आदौ सर्गादौ विद्वान् ज्ञानवान्, सिद्धो नित्यः, सम्प्रदायप्रद्योतको वेदं प्रणीय सर्गादिसमुत्पन्नाध्यापकः, अनुग्राहकः कुलालादिकृतेऽपि घटादौ सहकारीत्यादिक्रमेण। नचैवमैकमत्येन दर्शनभेदानुपपत्तिः, फलैकमत्येऽपि प्रकारभेदात्[३] सर्व्वथा विरोधा-

---

* प्रसिद्धानुभवे,—इति क० पुस्तके पाठः।

---

(१) एकार्थपरतया अविरुद्धार्थपरतया।

(२) घटादिभिन्नत्वसमानाधिकरणौपाधिकचैतन्यशून्यत्वं विशिष्टाभावस्त-न्मते उभयाभावात, अस्मन्मते तद्विशेष्याभावादिति वदन्ति। तच्चिन्त्यं, तथा हि विशेष्याभावस्योभयमतसाधारणत्वे विशेषण-पदवैयर्थ्यापत्तेः। यत्तु घटाद्यतिप्रसङ्गवारणार्थमेव सत्यन्तमिति। तच्चिन्त्यं, तदतिप्रसङ्गस्यादोषत्वात्। अन्यथा दोषहीनत्वनित्यत्वा-दावपि तथात्वप्रसङ्गात्,—इति मकरन्दः।

(३) उक्तप्रकारावच्छिन्नधर्मिण्यैकमत्येऽपि प्रकारान्तरभेदेन दर्शनभेदा-दित्यर्थः,—इति मकरन्दः।

न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ।
उपासनैव क्रियते श्रवणानन्तरागता ॥ ३ ॥

श्रुतोहि भगवान् बहुशः श्रुतिस्मृतीतिहासपुराणेष्विदानीं मन्तव्योभवति। "श्रोतव्योमन्तव्यः"—इति श्रुतेः।

---

भावे विचारोपयोगिसंशयस्याप्यभावप्रसङ्गात्। यद्यपि मीमांसकानीश्वरसांख्यमते नेश्वरे संप्रतिपत्तिः, तथाप्युपास्यत्वेन धर्म्मिणि संप्रतिपत्तिरस्त्येव। कारुः शिल्पी। विश्वं सर्व्वमुत्पत्तिमत् कर्म्म कार्य्यं यस्य स तथा। जातिर्ब्राह्मणादि। गोत्रं काश्यपादि। ऋषयएव यज्ञे व्रियमाणाः प्रवराः। चरणं शाखा। अनुभावोऽसाधारणं कार्यं वेदादि। अतएव भवत्यस्मादिति भवः। तथाच, जातिगोत्रादिवत् संसारमभिव्याप्य श्रुत्यादिप्रमाणसिद्धे परमात्मनि न सन्देहोऽतस्तत्रेश्वरे किं निरूपणीयमित्यर्थः। तथापि धर्म्मिणि भगवति विहितमनने प्रकाराकाङ्क्षायां तत्र विप्रतिपत्त्या सन्देहोऽस्तीति मनसि कृत्य मननरूपोपासनैव क्रियते इति समाधत्ते तथापीति।

न्यायेन चर्चा न्यायचर्चा अनुमितिरूपा, उपासनैवेति संबन्धः। श्रवणानन्तरागतेत्यनेन श्रुतिप्रामाण्यग्राहकन्यायनिरूपणमपि सूचितम्। श्रवणानन्तरागतेति संगृहीतं विवृणोति श्रुतोहीति। श्रुतिमूलकत्वात् स्मृतेरपि तत्समानविषयतया स्वबोधदार्ढ्यार्थं

"आगमेनानुमानेन ध्यानाभ्यासरसेन च ।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम्"—
इति स्मृतेश्च ।

अत्रणे उपयोगउक्तः(१) । उत्तमोयोगआत्मसाक्षात्कारः । ननु भगवति सन्देहाभावेन सिद्धसाधनात् कथमनुमितिः ? सिद्धसाधनं स्वार्थानुमाने न दोषः प्रमाणसंप्लवस्य संस्थापनात्(२)* इति चेत्, न, विनिगमकाभावात्(३), ग्रन्थस्य परार्थानुमानरूपत्वाच्च । यथा, "अग्नि-

* व्यवस्थापनात्,—इति ह० पुस्तके पाठः ।

(१) एतच्च "श्रोतव्यः श्रुतिवाक्येभ्यः"—इति नियमविध्यवष्टम्भेनोक्तम् । वस्तुतस्त्वात्मप्रतिपादकप्रमाणवाक्यपरमेव श्रुतिपदम्, अन्यथा स्वार्थकतापत्तेः । पूर्वपूर्वप्रतिपत्तेर्हि उत्तरोत्तरप्रतिपत्तिद्वारकता, सा श्रुतिमात्रजनितश्रवणसाध्यतायां नियमापूर्वकल्पनया भज्येत, द्रष्टव्यइत्यत्रादृष्टद्वारकताभयेन पाठिकक्रमोल्लङ्घनमपि तस्य नोचितं स्यादिति पुराणस्मृत्यादिना श्रुते मननादिभिः सिद्धिर्भवत्येवेत्याहुः,— इति मकरन्दः । अन्यत्राप्युक्तम् "स्मृत्यन्यप्रमाणप्रवृत्त्वेन प्रक्तमपि श्रुतिपदं प्रमाणप्रवृत्त्वेन श्रुतिस्मृती बोधयन्न लाक्षणिकम्"— इति ।

(२) "किं पुनः प्रमाणानि प्रमेयमभिसंप्लवन्ते अथ प्रमेयं व्यवतिष्ठन्ते इति, उभयथा दर्शनम्"—इत्यादि, "प्रमातुः प्रमातव्येऽर्थे प्रमाणानां सङ्करोऽभिसंप्लवः, असङ्करो व्यवस्था"—इत्यन्तं न्यायभाष्यमत्रानुसन्धेयम् ।

(३) सिद्धभावरूपायाः पक्षतायाअनुमितिहेतुत्वे तदभावादनुमित्यभावस्योभयत्र तुल्यत्वादित्यर्थः । ननु नोक्तरीत्या सिद्धसाधनस्य दोषत्वं

होत्रं जुहोति, यवागूं पचति"—इत्यत्रार्थेन क्रमेण शाब्दः क्रमो[१] लङ्घ्यते, तथा "श्रोतव्योमन्तव्यः"—इत्यत्रापि मननानन्तरं श्रवणे श्रुतेस्तात्पर्य्यमिति चेत्, न *, दृष्टान्ते, होमे द्रव्यान्तरसाधनत्वं यवागूपाकस्यादृष्टार्थत्वञ्च कल्प्यमिति गौरवात्तथाऽस्तु, प्रकृते त्वनुपपत्त्यभावः† श्रवणानन्तरं मननस्यान्यथोपपाद्यत्वात्[२], श्रवणानन्तरागतेति ग्रन्थविरोधाच्च। "श्रोतव्यः श्रुतिवाक्येभ्यः"—इति बहुवचनं "कपिञ्जलानालभेत"—इतिवत् त्रित्वपरम्, अतोरूपान्तरेण[३] मननमविरुद्धमिति चेन्न, "श्रोतव्योमन्तव्यः"—इति सामानाधिकरण्यश्रुतेर्लाघवाच्च[४] येनैव

---

* न इति नास्ति सो० पुस्तके।

† प्रकृते तदनुपपत्त्यभावः,—इति सो० पुस्तके पाठः।

---

किन्त्वर्थान्तरतया, तच्च द्वारदोषत्वेन स्वार्थानुमाने न दोषइति यदि ब्रूयात्तत्राह ग्रन्थस्येति,—इति मकरन्दः।

(१) क्रमे शाब्दत्वं पाठिकत्वं न तु शब्दप्रतिपाद्यत्वं, क्रमप्रतिपादकाभावात्,—इति मकरन्दः।

(२) अन्यथा सिषाधयिषया।

(३) यावतां कपिञ्जलानामालभनस्याशक्यतया कतिपयपरतायामावश्यकत्वेन बहुवचनस्य प्रथमोपस्थितत्रित्वपरत्वं यथा निर्णीतं, तथा श्रुतिवाक्येभ्यइति बहुवचनमपि त्रित्वपरं वक्तव्यम्। तथा च श्रवणसाधनवाक्यत्रयबोधितप्रकारेभ्यः प्रकारान्तरेणानुमितौ न सिद्धसाधनदोषइति भावः।

(४) धर्मिमात्रविषयतयैव सामानाधिकरण्यं भविष्यतीत्याशङ्क्याह लाघवा-

रूपेण श्रवणं तेनैव रूपेण मननस्योचितत्वात्। न वा, रूपान्तरेण श्रुतस्य * रूपान्तरेण मननेऽश्रद्धामलक्षालनं शास्त्रव्यापारोनिर्व्वहति, श्रुतस्यामननात्। अतएव[१], धर्म्मिस्वरूपे सन्देहाभावेऽपि, चिति-कर्तृत्वादौ † धर्म्मे सन्देहात्तत्रानुमेत्यपास्तम्। तथापि धर्म्मिणि सन्देहानुपपादनाच्च ‡[२]। न वा, तद्रूपमस्तीश्वरे, यन्न वेदे श्रुतमस्ति। तथा च, 'श्रोतव्यः श्रुतिवाक्येभ्यः'—इत्यत्रासङ्कोचादीश्वरपरसर्व्ववाक्येभ्यएव[३] श्रवणे सति कथं मननम्। एतेन[४] भगवति भवे सन्देहएव किं निरूपणीयमिति कुतः पृथिवीतः कर्तृजन्यत्वसंशयात्तत्र संशयएवेत्यपि योजनामात्रमपास्तम्[५]। यत्तु, श्रुतेऽपि भगवति श्रुतेः प्रामाण्यसन्देहात्तत्प्रतिपादितेऽपीश्वरे सन्देहः,—इति। तन्न, "श्रोतव्योमन्तव्यः"—इति सामानाधिकरण्यविरोधात्, मननस्य प्रामाण्यविषयकत्वात्। यदि च श्रुतिरनवधृतप्रामाण्यैव, तदा कथं ततः श्रवणेऽपि वक्तायासश्चाध्ये

---

* रूपान्तरेण श्रुतस्य,—इति नास्ति सो॰ पुस्तके।

† चितिकर्तृकत्वादौ,—इति सो॰ पुस्तके पाठः।

‡ सन्देहानुपादानाच्च,—इति सो॰ पुस्तके पाठः।

---

चेति। "अवगतप्रकारस्योपस्थितत्वेनानुपस्थितप्रकारकल्पनायां गौरवात्"—इति मकरन्दः।

(१) श्रुतस्यामनने उक्तशास्त्रव्यापारानिर्व्वाहादेवेत्यर्थः,—इति मकरन्दः।

(२) तथा च परमात्मा निरूप्यते इत्यसङ्गतमेवेति भावः,—इतिमकरन्दः।

(३) कपिञ्जले तु बाधात् त्रित्वपरत्वं बहुवचनस्येति भावः।

(४) उक्तरीत्या धर्मिणि धर्मे च सन्देहाभावेन।

(५) मात्रपदात् योजनैव कृता, न तु सन्देहोपपादकं किञ्चिदुक्तमिति सूचितम्।

प्रवृत्तिः(१)। तथात्वेऽपि वेदप्रामाण्यानुमानमात्रौचित्यादीश्वरानुमानानुपपत्तिः।

अथ, सिद्धसाधनं न हेत्वाभासः। उभयथा हि हेत्वाभासता, करणविघटकत्वाद्विरुद्धानैकान्तिकयोरिव(२), तद्विघटनमकुर्वतः स्वत एव प्रतिबन्धकत्वाद्बाधप्रतिरोधवत्(३)। सिद्धसाधनन्तु न व्याप्तिविघटकं न वा स्वतएव प्रतिबन्धकम्। अतो न हेत्वाभासः। दूषकतात्वर्थान्तरान्तर्भावात् *(४) इति मतम्। तन्न, व्याप्तिज्ञानस्येव पक्षधर्म्मताज्ञानस्यापि तत्कारणत्वात् तद्विघटकसिद्धसाधनस्यापि तदौचित्यात्(५)। पक्षधर्म्मताज्ञानं न तत्करणं किन्तु व्याप्तिज्ञानमिति चेन्न,

* दूषकतात्वर्थान्तर्भावात्,—इति सो॰ पुस्तके पाठः।

(१) श्रोतव्योमन्तव्यइति श्रुतावपि प्रमाण्यसन्देहोऽविशेषादिति भावः।

(२) असिद्धस्याप्युपलक्षणमेतत्।

(३) प्रतिरोधः सत्प्रतिपक्षः।

(४) "प्रकृतादर्थादप्रतिसंवद्धार्थमर्थान्तरम्",—इति न्यायसूत्रम्। प्रकृतानाकाङ्क्षिताभिधानमिति फलितार्थः,—इति न्यायसूत्रवृत्तिः। सिद्धे आकाङ्क्षानुदयात् सिद्धसाधनस्थले अर्थान्तरमिति ध्येयम्। अर्थान्तरं च निग्रहस्थानतया पुरुषदोषो न हेतुदोषः। तथा च "न्यायोपदेश्टरि सापराधेऽपि स्वात्ममननसिद्धिरप्रत्यूहैवेति भावः"—इति मकरन्दः।

(५) सिद्धसाधनस्थले सिद्ध्यभावरूपायाः पक्षतायाएवासम्भवादितिभावः। "यद्यपि पक्षतायाः स्वातन्त्र्येण पृथक् कारणत्वात् तद्विघटकत्वेऽपि न ज्ञानविघटकत्वं, तथापि यः पक्षस्तद्धर्मताज्ञानत्वेन हेतुत्वमिति पक्षतायाअवच्छेदकत्वाभ्युपगमेन यादृशस्य हेतुत्वं तादृशज्ञानस्य विघटकत्वमेव,"—इति मकरन्दः।

लाघवात् कारणमात्रस्य प्रयोजकत्वात्(१)। श्रुतिबोधितेऽपि भगवति षड्विधकर्तृत्वकौटस्थ्यनिरञ्जनादिश्रुतेः कुत्र श्रुतिर्मुख्यार्था कुत्र वोपचरितार्थेति तात्पर्य्यसन्देहात्(२) सन्देहइति चेन्न, तथापि धर्म्मिस्वरूपे संशयानुपपादनात्† तात्पर्य्यग्राहकन्यायाभिधानमात्रस्योचितत्वात्। कर्तृत्वादौ सन्देहादुत्कटकोटिको‡ धर्म्मिण्येव सन्देहोऽन्यथा धर्म्मी क्वापि संशयविषयो न स्यादिति चेन्न,§ "श्रोतव्योमन्तव्यः"—इत्यत्रात्मज्ञानस्य मोक्षहेतुत्वं न तु तद्धर्म्मिककर्तृत्वादिनिश्चयस्येति तत्सन्देहस्यानुच्छेद्यत्वात्। तथापि निर्धर्म्मकस्य तस्य ज्ञातुमशक्यत्वात् तद्धर्म्मनिश्चयोऽप्यादरणीयः,—इति चेन्न, परस्पराविरुद्धप्रकारेण‖ तच्चिन्तनोपपत्तेरिति दिक्।

---

† संशयानुपादानात्,—इति सो॰ पुस्तके पाठः।

‡ सन्देहात्तत्कोटि,—इति ह॰ पुस्तके पाठः।

§ तथापि,—इत्यधिकं ह॰ पुस्तके।

‖ परस्पराविरुद्धत्वप्रकारेणापि,—इति सो॰ पुस्तके पाठः।

---

(१) तथा च पक्षतायाः पृथक् कारणत्वपक्षे तद्विघटकतयापि तदौचित्यं ध्वनितम्। न च ज्ञायमानप्रतिबन्धकत्वाभावान्न सिद्धसाधनं हेत्वाभासइति वाच्यं प्राचीनमते अनुमित्यसाधारणदोषस्यैव तथात्वात्, एवमपि साध्यज्ञानमादाय साध्यस्य तथात्वेन बाधकाभावाच्च —इति मकरन्दः।

(२) कर्तृत्वं कौटस्थं निरञ्जनत्वं च परस्परविरुद्धमित्युभयत्र श्रुतेर्मुख्यार्थत्वासम्भवेनावश्यं क्वचिदुपचारआश्रयणीयइत्यभिमानः।

अत्रोच्यते। साध्यज्ञानं न स्वतः साध्यज्ञानविरोधि, धारावाहिकसत्त्वात्, नापि साध्यानुमितिविरोधि, प्रत्यक्षाधिगतस्याप्यनुमितिदर्शनात्(१), किन्तु सिषाधयिषाघटितपक्षत्वविघटनद्वारा। सिषाधयिषा च साध्यज्ञानेच्छा, सा च द्वयी साध्यज्ञानमात्रे तद्विशेषे च। तत्र या साध्यज्ञानमात्रेच्छा* सा श्रौतज्ञानान्निवर्त्ततताम्। यत्किञ्चिद्विशेषसिद्धैव† हि सामान्येच्छाविच्छेदः। अन्यथा सकलविशेषसिद्धेरसम्भवेन तद्विच्छेदः क्वापि न स्यादेव। या त्वनुमितिरूपसाध्यज्ञानविशेषेच्छा सा कथं निवर्त्तेत, तद्विषयस्य ज्ञानविशेषस्यासिद्धेः। इच्छायाः स्वविषयसिद्धिनिवर्त्त्यत्वात्(२)। अत्र च, "श्रोतव्यो मन्तव्यः"—इति श्रुत्या मननस्येष्टसाधनत्वावगतेः श्रौते ज्ञाने वृत्तेऽपि मनन-

---

* साध्यज्ञानसामान्येच्छा,—इति मु॰ पुस्तके पाठः।

† यत्किञ्चिद्विशेषबुद्धैव,—इति सो॰ पुस्तके पाठः।

---

(१) तथाच, वाचस्पतिमिश्रैरुक्तम्, "प्रत्यक्षपरिकलितमप्यनुमानेन बुभुत्सन्ते तर्करसिकाः"—इति। तत्त्वचिन्तामणावप्येतदुक्तम्।

(२) ननु स्वविषयसिद्धिनिवर्त्त्या नेच्छा किन्तु तद्धीनिवर्त्त्या। अन्यथा प्राप्तधनस्यापि तत्प्राप्तिमजानतस्तदिच्छाविच्छेदापत्तेः। एवञ्च सिद्धसाधनस्थलेऽप्युत्पन्नसिद्धेरग्रहे तदिच्छायाश्चानिवृत्तेः पक्षता स्यादिति चेत्। अत्राहुः। विषयसिद्धिः साक्षान्नेच्छानिवर्त्तिका, उत्पन्नायास्तस्याविरोधिगुणनिवर्त्त्यत्वात्। तस्मात्तद्धेतोरसिद्धत्वज्ञानविघटनद्वारा इच्छान्तरोत्पत्तिप्रतिबन्धकत्वेन तथात्वं वाच्यम्। तच्च प्रकृते सिद्ध्युत्पत्तिमात्रेणैव, सिद्धौ सत्यां तदसिद्धत्वभ्रमसंशयाभावात्। धनादिस्थले च तत्सम्भवेन प्राप्तिपर्यन्तानुसरणम्,—इति मकरन्दः।

स्यासिद्धत्वात् तत्रेच्छा भवत्येवेति न सिषाधयिषाविघटनद्वारकदूषणभावस्य सिद्धसाधनस्यावकाशः, इच्छाविषयत्वावच्छेदकरूपतत्सिद्धेः सिद्धपदेन विवक्षितत्वात्। अतएव(१) सिद्धसाधनं दशाविशेषे दोषः, पृथक् च न दूषणम्, (२) असिद्ध्युपजीव्यत्वेऽपि * बाधवत् स्वतोदूषकत्वाभावात्, किन्तु दूषकतायामुपाधेरिव परमुखनिरीक्षकत्वात्। भवेदेवं यदि सिषाधयिषाघटितं पक्षत्वम्, तदेव न, तस्य विशेषणतोपलक्षणतयोरुभयत्रापि दोषात् (३) योग्यतायाश्च तदवच्छेदकरूपपरिच्छेद्यत्वादिति चेन्न, सिषाधयिषाविरहसहकृतसाधकप्रमाणाभावस्य(४) तत्त्वात् †। स च विशिष्टाभावो यत्र साधकप्रमाणसिषाधयिषे स्तः तत्र विशेषणाभावात्, यत्रोभयाभावस्तत्र विशेष्याभावात्, यत्र साधकप्रमाणाभावे सिषाधयिषामात्रमस्ति तत्र द्वयाभावात् सर्वत्राविशिष्टः।

---

* असिद्ध्युपजीवकत्वेऽपि,—इति स० पुस्तके पाठः।

† सत्त्वात्,—इति सो० पुस्तके पाठः।

---

(१) दूषणत्वप्रयोजकसिषाधयिषाविघटनस्यासार्वत्रिकत्वादेवेत्यर्थः,— इति मकरन्दः।

(२) द्वितीये हेतुमाह असिद्धीति।

(३) लिङ्गदर्शनादिना तन्नाशात् न विशेषणत्वं, सिद्धसाधनस्थलेऽतिप्रसङ्गान्नोपलक्षणत्वम्,—इति मकरन्दः।

(४) साधकमानपदं सिद्धिपरम्। तेन घनगर्जितस्थले परामर्शात्मकसाधकप्रमाणमादाय नाव्याप्तिः। सिद्ध्युपहितप्रमाणपरं तदित्यन्ये। सिषाधयिषायाश्च विशेषणत्वमेव तदुत्तरस्मरणलक्षणपरामर्शादनुमितौ विनश्यदवस्थसिषाधयिषायाश्च तथात्वात्,—इति मकरन्दः।

यत्र साधकप्रमाणे सत्यपि (१) सिषाधयिषायाश्चाभावस्तत्र नास्तीत्यस्मत्पितृचरणाः। तथापि संशयं विना कथं न्यायावतारइति चेदित्थम्। संशयोहि न्यायाङ्गं न तावत् न्यायकारणतया, तस्य लिङ्गपरामर्शात्मनः (२) संशयं विनाऽपि सम्भवात्, कारणत्वासिद्धौ फलवैजात्यस्यापि कल्पने मानाभावात्, अन्योन्याश्रयाच्च। नापि सहकारित्वेन, तद्धि न साक्षात्, लिङ्गपरामर्शादिना तन्नाशात्, शाब्दलिङ्गपरामर्शे तत्कारणत्वाभावाच्च संशयस्य कारणत्वासिद्धौ तत्कल्पनेऽपि मानाभावात्। अतएव (३) परम्परयाऽपि सहकारित्वमपास्तम्। नाप्याश्रयावच्छेदकत्वेन, पर्वतत्वादेरेव तथात्वात्। अन्यथा पक्षतावच्छेदक धर्म-साध्ययोः सामानाधिकरण्यभाननैयत्येन पर्वतत्वादेरिव सन्दिग्धत्वस्याप्यनुमितौ भानापत्तेः। (४) अथ संशयेन स्वयोग्यतोपलक्षणात् साधकबाधकमानाभावो न्यायाङ्गमिति चेन्न, तथापि संशयस्यातत्त्वात्। संशययोग्यतायास्तदङ्गत्वात् विशिष्टस्य तद्ग्राहकमानेन

---

(१) 'सत्यपि'—इत्यत्र, 'सत्यसति वा'—इति मकरन्दसम्मतः पाठः। तथा च तेन व्याख्यातम्। "सत्यसति वेति समीचीने ह्यसमीचीने वेत्यर्थः। सतीति शेषः। तथा च भ्रमप्रमासाधारणानुमितिमात्रस्य प्रतिबन्धकतया तस्मिन् सति यत्र सिषाधयिषायाश्चाभावस्तत्र नास्तीति भावः"—इति।

(२) यद्यपि न्यायो न लिङ्गपरामर्शात्मा किन्तु पञ्चावयववाक्यं, तथापि तत्रापि तद्धेतुत्वे मानाभावात् परामर्शाभिप्रायेण दूषितमिति द्रष्टव्यम्,—इति मकरन्दः।

(३) व्यभिचारादेवेत्यर्थः।

(४) परामर्शादिना तन्नाशादित्यत्र शङ्कते अथेति,—इति मकरन्दः।

**तदिह संक्षेपतः पञ्चतयी विप्रतिपत्तिः, अलौकिकस्य परलोकसाधनस्याभावात्,**

---

विशेषणस्यापि तत्त्वं * विषयीकृतमिति चेन्न, मिलिताभावस्य प्रत्येकसत्त्वेऽपि सत्त्वात्, (१) प्रत्येकञ्च न योग्यता केवलान्वयिनि (२) बाधकाप्रसिद्धेश्चेत्यन्यत्र विस्तरः। तथापि, संशयस्यानुमितिमात्राहेतुत्वेऽपि जिज्ञासितार्थानुमितौ † जिज्ञासाद्वारा संशयस्यानुमितिहेतुत्वम्। (३) यद्वा, शङ्कृशुकतानिवृत्तये न्यायोपासने संशयोऽङ्गमिति (४) संशयं विना यो न परितुष्येत् (५) तं प्रति "श्रोतव्यो मन्तव्यः"—इति श्रुतेरनन्यगत्या भिन्नविषयकएव धर्मविशेषसंशयो धर्मिविषयकन्यायप्रवृत्तिहेतुरित्यास्थेयमिति विभावयंस्तत्कारणं विशेषविप्रतिपत्तिमादर्शयति तदिहेति।

---

* तथात्वं,—इति ह० पुस्तके पाठः।
† जिज्ञासितानुमितौ,—इति से० पुस्तके पाठः।

---

(१) ननु प्रत्येकाभावद्वयं योग्यता तच्च प्रत्येकसत्त्वे नास्तीत्यतआह प्रत्येकमिति। प्रत्येकाभावद्वयमित्यर्थः। साधकमानाभावमात्रस्य तथात्वे लाघवादिति भावः। अन्यथा पक्षताविरहादनुमितिप्रतिबन्धे बाधो हेत्वाभासो न स्यादित्यपि बोध्यम्,—इति मकरन्दः।

(२) साध्याभावसाधकस्य बाधकत्वमित्यभिप्रायेणेदम्। यद्यपि पक्षनिष्ठात्यन्ताभावप्रतियोगिग्राहकमानाविषयत्वं बाधकभावइति विवक्षितं तच्च नासिद्धिस्तथापि लाघवएव तात्पर्य्यम्,—इति मकरन्दः।

(३) संशयजिज्ञासाऽपि न तावत्कालस्थायिनीति मतान्तरमाह यद्वेति।

(४) तथा च निवर्त्त्यत्वेन संशयस्य न्यायाङ्गत्वमिति भावः।

(५) तथा च तत्प्रबोधनार्थं संशयबीजविप्रतिपत्तिप्रदर्शनं, न तु तद्विना मननासम्भवएवेति तात्पर्य्यम्,—इति मकरन्दः।

तदिति वाक्योपक्रमे। संक्षेपोऽवान्तरविप्रतिपत्त्यविवक्षा। विरुद्धा प्रतिपत्तिर्ज्ञानमभिलापो वा विप्रतिपत्तिः *। विप्रतिपत्तौ विषयिण्यां विषयस्य प्रयोजकत्वं (१) विवक्षित्वा पञ्चमीनिर्देशः। तत्रालौकिके तावत्, '(२) साक्षात्कारकारणेन्द्रियसन्निकर्षाश्रयत्वं प्रमेयत्वव्यापकं नवा? (३) इन्द्रियस्य तु न सन्निकर्षाश्रयत्वं किन्तु प्रतियोगित्वम्'—इति न विप्रतिपत्तिः, यएव चक्षुषा रूपस्य संयुक्तसमवायः सएव गुरुत्वस्यापीति तस्यापि लौकिकत्वापत्तेः। किन्तु सामान्यलक्षणप्रत्यासत्त्यजन्ययोगजधर्माजन्यजन्यस्वविषयकसविकल्पकाजन्यजन्यसाक्षात्कारविषयत्वं प्रमेयत्वव्यापकं न वा? (४) अभावसमवाययोस्तादृग्प्रति-

* विरुद्धा, इत्यादि, विप्रतिपत्तिः,—इत्यन्तं, नास्ति सो॰ पुस्तके।

(१) शब्दात्मकविप्रतिपत्तौ विषयस्य हेतुत्वाभावात् प्रयोजकत्वपर्य्यन्तानुसरणम्।

(२) अलौकिके परमाण्वादौ अतिप्रसक्तिर्व्यतिरेके च बाधइत्यतउक्तं साक्षात्कारेति। संयोगाद्यन्यतमप्रत्यासत्तिजन्यसाक्षात्कारकारणेत्यर्थः। विधिनिषेधकोटिप्रसिद्धिरभिधेयत्वघटत्वयोः सुलभा। विस्तरस्तु मकरन्देऽनुसन्धेयः।

(३) ननु घटसाक्षात्कारकारणघटचक्षुःसंयोगरूपसन्निकर्षाश्रयत्वं चक्षुषोऽपि न तु तत् लौकिकमित्यतआह इन्द्रियस्येति। यद्यपि संयोगस्य द्विष्ठत्वादिदमयुक्तं, तथापि नेन्द्रियविशिष्टसन्निकर्षाश्रयत्वमिन्द्रियस्य स्वात्माश्रयात्, किन्तु तदुपलक्षितसन्निकर्षाश्रयत्वम्। तदिदमुक्तं किन्तु प्रतियोगित्वमिति। तच्च तत्प्रतियोगिकसन्निकर्षाश्रयत्वेऽपि तस्योपलक्षणत्वमित्यर्थः,—इति मकरन्दः।

(४) न च तन्मते साक्षात्कारस्यैव प्रमात्वेन व्याप्यव्यापकाभेदात्कथं व्यापकत्वग्रहइति वाच्यं उपाधिभेदेन भेदात्। तादृशानुमितिविषयत्वं सर्व्वेषामिति सिद्धसाधनं व्यतिरेके च बाधइत्यतउक्तं साक्षात्का-

सविकल्पके धारावाहि कज्ञानार्थ

योगिसंवन्धिसविकल्पकजन्यसाक्षात्कारविषयत्वेऽपि प्रत्यक्षत्वात् तत्सं-ग्रहार्थं स्वविषयेति विशेषणम्। अत्र यद्यपि घटोऽयमिति सविकल्पके घटत्वस्य तत्कारण * ज्ञानविषयताऽस्ति, तथापि तज्ज्ञानाजन्यनिर्वि-कल्पकविषयताऽप्यस्ति। न हि तज्ज्ञानजन्यज्ञानगोचरत्वं तज्ज्ञाना-जन्यज्ञानगोचरताविरोधि, एकत्र ज्ञानद्वयस्य भावा † दित्याहुः।

अलौकिकविशेषे त्वदृष्टे प्रयत्नकारणात्मविशेषगुणनिरुपाधिविष-यकारणात्मविशेषगुणत्वं मानसप्रत्यक्षाविषये वर्त्तते नवा? (१) यद्वा, लौकिकप्रत्यक्षाविषयगुणत्वसाक्षाद्व्याप्यजात्यधिकरणत्वमात्मगुणे वर्त्तते

---

* तत्कारणक,—इति सो॰ पुस्तके पाठः।

† ज्ञानद्वयस्याभावा,—इति स॰ ह॰ पुस्तकयोः पाठः।

---

रेति। ईश्वरसाक्षात्कारमादाय दोषतादवस्थ्यादाह चरमजन्य-पदम्। अलौकिकप्रत्यासत्तिजन्यसाक्षात्कारमादाय दोषतादव-स्थ्यादाह पूर्वप्रतीकम्। तत्र जन्यपदमीश्वरज्ञानजन्यतया जग-तोऽप्रसिद्धिवारणार्थम्,—इति मकरन्दः।

(१) प्रयत्नकारणमात्मविशेषगुणाविच्छाद्वेषौ, तयोर्निरुपाधिविषयौ सुख दुःखे, तत्कारणत्वविशिष्टात्मविशेषगुणत्वं लौकिकमानसप्रत्यक्षा विषये वर्त्तते न वेत्यर्थः। न च मानसेति व्यर्थं, मानसप्रत्यक्षपदेन मनःप्रयोज्यजातिविशेषाश्रयस्योक्तत्वात् तत्र च व्यर्थत्वाभावात्। अखण्डाभावे वा न वैयर्थ्यम्। लौकिकपदञ्चाप्रसिद्धिवारणार्थम्। अत्र प्रयत्नकारणगुणाईश्वरज्ञानादिः, तन्निरुपाधिविषयो विशिष्ट-प्रत्यक्षं, तत्कारणात्मविशेषगुणत्वं तादृशनिर्विकल्पके वर्त्ततएवेति सिद्धसाधनमतआह प्रथममात्मविशेषपदम्। आत्मविशेषस्य संसा-र्यात्मनोगुणइत्यर्थः। ज्ञानमादाय पूर्वोक्तसिद्धसाधनतादवस्थ्यादाह प्रयत्नकारणेति। प्रयत्नसाक्षात्कारणेत्यर्थः,—इति मकरन्दः। अत्र वक्तव्यमधिकं मकरन्दएवानुसन्धेयम्।

नवा? (१) भावनात्वन्तु न गुणत्वसाचाद्याप्यमदृष्टत्वन्तु न जातिः (२)।

परलोके तु, समानकालीनानेकावृत्ति * शरीरवृत्तिजातित्वं दुःखावच्छेदकत्वासमानाधिकरणवृत्ति न वा? (३) इति स्वर्गे, नरके तु दुःखपदस्थाने सुखपदप्रक्षेपात् संशयः। तादृशी च जातिर्वाल्यादि-शरीरवृत्तिरसाधारणी चैत्रत्वादिः प्रसिद्धेति विशेषतः। परलोक-मात्रे तु सुखदुःखोभयजनक-मच्छरीरातिरिक्तशरीरवानहं न वेति संशयः †। चैत्रस्तथा प्रसिद्धः।

साधने तु (४) प्रागभावत्वाद्यप्रतियोगि कार्य्यं ‡ प्रतियोगित्व-

* समानकालीनानेकवृत्ति,—इति से० पुस्तके पाठः।
† संशयः,—इति नास्ति से० पुस्तके।
‡ कार्य्यं,—इति स० ह० पुस्तकयेः पाठः।

(१) प्रत्यक्षाविषयत्वमप्रसिद्धमिति लौकिकत्वं विशेषणम्। परमते चोपरञ्जकमेव तदिति बोध्यम्। सुखत्वादिकमादाय सिद्धसाधनवारणाय विषयान्तम्। गुरुत्वादिना सिद्धसाधनवारणाय आत्मपदम्। गुणपदं स्पष्टार्थम्,—इति मकरन्दः।

(२) तथा च गुणत्वव्याप्यजात्यव्याप्यतया धर्म्मत्वाधर्म्मत्वयोः गुणत्वसाक्षाद्व्याप्यतेति भावः।

(३) सत्तामादाय सिद्धसाधनवारणाय अवृत्त्यन्तम्। अनेकावृत्तिजातित्व मप्रसिद्धमिति समानकालीनपदम्। समानकालीनोत्पत्तिकत्वं तदर्थः। आत्मत्वमनस्त्वादिवृत्तित्वात् शरीरवृत्तीति। अत्र विधिकोटिर्नैयायिकानां, नेति बौद्धानाम्।

(४) साधने त्विति साधनत्वे त्वित्यर्थः। तत्रैवाग्रे विप्रतिपत्तिप्रदर्शनात्। धर्म्मिणस्तु दण्डादेः प्रागभावाविषयप्रतीतिविषयत्वात्, साधनत्वं च तथा, तस्य प्रागभावगर्भतया प्रमेयत्वादिनाऽपि ग्रहे प्रागभावविषयत्वनियमादिति। प्रागभावविषयकप्रतीतिविषयप्रतियोगित्वे साध्ये सिद्धसाधनं, कार्य्यस्य घटादेः प्रागभावघटान्योन्याभाववितिसमूहा-

तज्जातीयोत्पत्तिप्राक्क्षणत्वस्य प्रतियोगिनी याव्या-
पकता तदवच्छेदकत्वमित्यर्थः प्रतियोगीत्यनेन
प्राक्क्षणत्वे व्याप्यत्वं सूचितमिति । पं. ५ ।



प्रागभावान्यप्रागभावाविषयप्रतीत्यविषयप्रतियोगि न वा ? यद्वा, कार्य्यप्रतियोगित्वं [१] प्रतियोगित्वप्रागभावान्य प्रागभावाविषयबुद्ध्यविषयवृत्ति न वा ? द्वयोरपि प्रागभावत्वे प्रसिद्धिः [२] । यद्वा, कार्य्यपूर्ववर्त्तिनि [३] तन्नियतत्वं वर्त्तते न वा ? [४] यद्वा, तज्जातीयोत्पत्तिप्राक्क्षणत्वप्रतियोगिव्यापकतावच्छेदकत्वमत्यन्ताभावप्रतियोगिवृत्ति न वा ?

---

लम्बनविषयान्योन्याभावप्रतियोगित्वादिति नञ्द्वयम् । प्रागभावतत्प्रतियोगित्वाभ्यां तादृशप्रतीत्यविषयाभ्यां सिद्धसाधनवारणार्थं प्रतियोगिप्रागभावान्येति तादृशप्रतीत्यविषये विशेषणम् । प्रागभावप्रतियोगित्वप्रागभावान्येत्यर्थः,—इत्यादि मकरन्दसन्दर्भोऽत्रानुसन्धेयः ।

(१) यद्यपि पूर्व्वेण कार्य्यत्वस्य सप्रतियोगित्वमभिप्रेतमनेन च कारणतायाः, तथापि साक्षात्सम्बन्धित्वमेव प्रतियोगित्वमभिप्रेतं तच्चोभयनिरूपितमुभयत्र तुल्यमित्यविरोधइति मकरन्दः ।

(२) ननु प्रथमविप्रतिपत्तौ प्रागभावत्वस्य विवक्षितत्वात् तमादाय प्रसिद्धिसम्भवेऽपि द्वितीयायामसम्भवः । न हि प्रागभावत्वस्य प्रागभावत्वत्वे वृत्तिरपितु प्रागभावएव, स च न प्रागभावान्यइति चेन्न, प्रागभावत्वपदेन प्रागभावत्वस्य विवक्षितत्वात् तस्य च तादृशबुद्ध्यविषये प्रागभावत्वे वृत्तेः तत्प्रतियोगित्वाच्चेत्येके । प्रागभावत्वपदेन प्रागभावधर्म्मः प्रमेयत्वं विवक्षितमित्यन्ये,—इति मकरन्दः ।

(३) अनन्यथासिद्धकार्य्यपूर्व्ववर्त्तिनीत्यर्थः । तेनाकाशादिव्युदासः । विशिष्टस्याप्रसिद्धत्वेऽपि खण्डशः प्रसिद्धेरिति भावः ।

(४) एकं ब्रह्मैवकारणमेकजातीयं प्रधानं वेत्यत्र संशयमाह यद्वेति । तज्जातीयोत्पत्तिप्राक्क्षणत्वं यत्र, तत्र ब्रह्माधिकरणत्वं प्रधानाधिकरणत्वं वेत्यत्र व्यापकीभूताधिकरणत्वे अवच्छेदकं विशेषणीभूतं ब्रह्मैव प्रधानं वा नात्यन्ताभावप्रतियोगि व्यापकनित्यत्वादिति, निषेधकोटिः परेषां विधिकोटिरस्माकम्,—इति मकरन्दः ।

**अन्यथाऽपि परलोकसाधनानुष्ठानसम्भवात्, तदभावावेदकप्रमाणसद्भावात्, सत्त्वेऽपि तस्याप्रमाणत्वात्, तत्साधकप्रमाणाभावाच्चेति ।**

---

विशिष्टे तु, अलौकिके परलोकसाधनत्वं वर्त्तते न वा, परलोकसाधनेऽलौकिकत्वं वर्त्तते न वेति विप्रतिपत्तिः । तथा च, कार्य्यकारणभावाभावे क्षित्यादिकर्त्तृत्वान्नेश्वरसिद्धिः, परलोकाभावे च तत्साधनयागादिद्रष्टुरभावे तदुपदेशकतयाऽपि नेश्वरसिद्धिः, अदृष्टासिद्धौ तदधिष्ठातृतयाऽपि नेश्वरसिद्धिरिति चार्वाकाभिप्रायः ।

अन्यथेति अदृष्टादिसत्त्वेऽपि वेदानामाप्तोक्तत्वेन प्रामाण्यावधारणं विना तद्बोधितस्वर्गादिसाधनयागादौ बहुवित्तव्ययायाससाध्ये न प्रवृत्तिरित्याप्तो वेदकारः सिध्यतीति नास्ति, अन्यथाऽपि वेदानां नित्यनिर्दोषत्वेन स्वतः प्रामाण्यावधारणात्, परतः प्रामाण्येऽपि कर्म्मयोगसिद्धसर्वज्ञपूर्वकत्वात्तेषां परलोकसाधनयागाद्यनुष्ठानसम्भवादित्यर्थः । तदभावेति भवतु वेदानां पौरुषेयत्वाद्योगसिद्धसर्वज्ञपूर्वकत्वेनाश्वासाच्चाप्तोक्तत्वं, तथापि तत्र, क्षित्यादेः कर्तृजन्यत्वे च * प्रत्यक्षादिबाधान्न तत्सिद्धिरित्यर्थः । सत्त्वेऽपीति बाधकाभावात्तत्सिद्धावपि स न प्रमाणं, प्रमाणपदं हि भावकरणकर्त्तृव्युत्पत्त्या प्रमातत्साधनतदाश्रयेषु वर्त्तते, यथार्थानधिगतार्थाधिगतिश्च प्रमा, तथा च, यदीश्वरः कर्त्ता स्यात् प्रमावांस्तत्करणेन्द्रियादि † मांसत्सम-

---

* कर्त्तृजन्यत्वेपि,—इति से० पुस्तके पाठः ।

† तत्करणेन्द्रिय,—इति से० पुस्तके पाठः ।

तच्च न प्रथमः, कल्पः यतः,

वायिकारणञ्च स्यात्, न चायं तथेति विपर्य्ययानुमानादित्यर्थः। अप्रमाणपुरुषस्य वचः कः श्रद्धास्यतीति भावः। तत्साधकेति कार्य्यत्वादेरुपाधिदुष्टत्वात्, क्षितिवेदादेः कर्त्तृजन्यत्वसाधकमेव नास्तीत्यर्थः।

तत्र चार्वाकस्यायं भावः, कार्य्यकारणभावे प्रत्यक्षं न तावन्मानं, धर्मिस्वरूपप्रत्यक्षेऽपि तत्र संशयात्, नचान्वयव्यतिरेकानुविधान ज्ञानसहकारिविरहात्सदिति वाच्यं तन्मात्रस्य व्यभिचारिसाधारण्यात्, नियमानन्यथासिद्धोश्च शङ्काकलङ्कितत्वेनानवधारणात्, नाप्यनुमानं, तस्य मया मानत्वेनानभ्युपगमात्, तत्साधने क्वचिदसिद्धावन्वयिनोऽसम्भवात्, तदप्रसिद्धौ * व्यतिरेकाज्ञानात् केवलव्यतिरेक्यनवतारात्, मम त्वप्रमितस्यासत्ख्यात्यभ्युपगमात् न निषेध्याप्रसिद्धिरित्यत आह तच्चेति। तेषु मध्ये न प्रथमः पक्षः, कल्पोयतः, कल्पनाऽसत्ख्यातिस्तद्विषयः (१)। (२) तथाहि, कार्य्यकारणभावानभ्युपगमे परप्रतिपत्ति-

* तत्साधनेऽपि क्वचिदप्रसिद्धावन्वयिनोऽसम्भवादसिद्धौ,—इति ह० पुस्तके पाठः।

(१) न प्रथमः कल्पइति सामानाधिकरण्ये प्रथमकल्पस्य हेत्वभावरूपतया तदभावस्य साध्यस्य हेतुरस्तीति पर्य्यवसाने,यतो हेतुरस्तीत्यत्र साध्याविशेषेण हेतुत्वान्वयानुपपत्तिः स्यात्। यदि च न प्रथमः कल्पइत्यस्य हेत्वभावकल्पोन प्रामाणिकइत्यर्थस्तथापि यतो हेतुरस्तीति व्यधिकरणम्। तथा च हेत्वभावकल्पोन प्रामाणिकः असत्ख्यातिविषयत्वादित्यत्र नोक्तदोषइति तदर्थपरतया व्याख्यातम्,—इति मकरन्दः।

(२) यद्यपि पक्षादेरप्रसिद्ध्या नोक्तानुमानसम्भवस्तथापि तन्मतानुसारेणासत्ख्यात्युपनीतपक्षादिकमालम्ब्य तत्पक्षाभावसाधनमुपन्यस्तम्। परमार्थतस्त्वेतदक्षरसादेव व्याघातं दर्शयति तथाहीति।

सापेक्षत्वादनादित्वाद्वैचित्र्याद्विश्ववृत्तितः ।
प्रत्यात्मनियमाद्भुक्तेरस्ति हेतुरलौकिकः ॥ ४ ॥

---

फलकवचनप्रयोगानुपपत्तेः, यथा यथा तन्निराकरणाय प्रयत्नस्तथा तथा तस्यैवापत्तेरिति व्याघातएवेत्यर्थः। तथापि साधकं विना न तत्सिद्धिरिति चेत्, तत्राह सापेक्षत्वादिति। विवादपदस्य सापेक्षत्वात् सहापेक्षया वर्त्तमानत्वात् कादाचित्कत्वादित्यर्थः। तच्च किञ्चित्कालासंवन्धित्वे सति किञ्चित्कालसंवन्धरूपं कार्य्याणां प्रत्यक्षसिद्धमित्यनन्यथासिद्धमेतत् *। (१) अस्मादनन्तरमिदं भवत्येतदभावे नेति प्रत्यक्षमेव कार्य्यकारणभावे मानम्। अतएव (२) प्रागभावस्य कादाचित्कत्वेऽपि न तत्र तत्सिद्धिः। प्रागसत्त्वस्य विवक्षितत्वाद्वा। अपि च, इदमस्मान्नियतपूर्व्वसदित्यपि (३)† प्रत्यक्षं तत्र मानम्। प्रत्यक्षे चानन्यथासिद्धि-नियमावधारणहेतुशङ्कानिवर्त्तकस्तर्कोदर्शयिष्यते इति भावः ‡। (४) यद्वा §

---

* कार्य्याणां प्रत्यक्षमनन्यथासिद्धमेतत्,—इति सो० पुस्तके पाठः।

† नियतपूर्व्वभावी भावइत्यपि,—इति ह० पुस्तके। नियतपूर्व्वभावीत्यपि,—इति स० पुस्तके पाठः।

‡ प्रत्यक्षे,—इत्यारभ्य, भावः,—इत्यन्तं नास्ति ह० पुस्तके।

§ यद्वा,—इति नास्ति सो० पुस्तके।

---

(१) प्रागभाववारणाय प्रत्यक्षं विशिनष्टि अस्मादिति।

(२) उक्तप्रत्यक्षस्य प्रागभावे असम्भवादेव।

(३) अनन्यथासिद्धनियतपूर्व्वसदित्यर्थः।

(४) ननु परं प्रति प्रत्यक्षमुपन्यासानर्हमेव अनुमानच्छाययैव तत्र तस्य गमकत्वाङ्गीकारात्। किञ्च कादाचित्कत्वमुपन्यस्तमनमकमेवैवं स्यादित्यतआह यद्वेति,—इति मकरन्दः।

प्रत्यक्षोपन्यास प्रति

प्रत्यक्षसहकारित्वेनानुमानमेवोपन्यस्तम् । (१) यद्वा, प्रथमतोऽनुमान-प्रामाण्यं प्रसाध्य कार्य्यं सहेतुकं कादाचित्कत्वात् यन्नैवं तन्नैवं यथाऽऽकाशम् । न च साध्याप्रसिद्धिः, कियद्भागे प्रत्यक्षेणैव तत्सिद्धौ तदविषयेऽनुमानात् । न चोत्पत्तेः कादाचित्कत्वेऽपि न सहेतुकत्वं, तथात्वे वोत्पत्तिमत्त्वापत्तावनवस्थेति वाच्यं कार्य्यस्याद्यक्षणेन सह* स्वरूपसंबन्धएव (२) ह्युत्पत्तिः † कार्य्यक्षणस्वरूपयोस्तोत्पत्तिमत्त्वेन हेतुमत्त्वात् । (३)यद्वा, उत्पत्तिगर्भः‡ किञ्चित्समयसंबन्धः कादाचित्कत्वम्, (४) अतएव न प्रागभावे व्यभिचारो नचोत्पत्तेरुत्पत्तिमत्त्वेन हेतुमत्त्वात् सदृति न तया व्यभिचारः§। एतेनानुमानपक्षे 'हेतुरस्ति सापेक्षत्वात्' इत्यत्र हेतोरसिद्धावाश्रयासिद्धिः सापेक्षत्वस्य कार्य्यधर्मत्वेन हेतावहत्तेः स्वरूपासिद्धिश्च, कार्य्यस्यैव पक्षत्वे, सापेक्षत्वादित्यस्य हेतुमत्त्वादित्यर्थे साध्या-

---

* सह,—इति नास्ति से० पुस्तके ।

† संबन्धोह्युत्पत्तिः,—इति ह० पुस्तके ।

‡ उत्पत्तिगर्भ,—इति पाठान्तरम् ।

§ नचोत्पत्तेरुत्पत्तिगर्भः सदृति न तया व्यभिचारः,—इति से० पुस्तके ।

---

(१) नन्वनुमानप्रामाण्ये किं सहकारितया स्वतस्तस्यैव समर्थत्वात्, अप्रामाण्ये सहकारित्वमपि न स्यात्, किञ्चैवं प्रत्यक्षत्वानुमितित्वयोः सङ्करापत्तिरित्यनुशयेनाह यद्वेति,—इति मकरन्दः ।

(२) सूर्य्यस्पन्दात्मकेन क्षणेन समं घटादेः कार्य्यस्य संबन्धान्तराभावादिति भावः ।

(३) यथाश्रुते कादाचित्कत्वं प्रागभावे व्यभिचारि, प्रागसत्त्वविशेषितञ्च व्यर्थविशेष्यत्वग्रस्तमित्यरुचेराह यद्वेति,—इति मकरन्दः ।

(४) नन्वेवमुत्पत्तिमात्रमेव हेतुरस्तु अधिकस्य व्यर्थत्वादिति चेत् न, इष्टत्वात्, उत्पत्तिगर्भपदेनोत्पत्तिरूपस्य विवक्षितत्वात्, तथाचाद्य-

विशेषः, कादाचित्कत्वादित्यर्थे च प्रागभावेन व्यभिचारइत्यपास्तम्।

ननु हेतुरपि यदि सदातनस्तदा तत्सापेक्षस्य कार्य्यस्यापि तथात्वापत्तिरिति कादाचित्कत्वमहेतोरिवाकाशादेः सहेतोरपि सपक्षात् * व्यावृत्तमित्यसाधारणं (१) स्यादिति हेतुः कादाचित्को-वाच्यः, तथा च तस्यापि कादाचित्कत्वं हेत्वपेक्षयेत्यनवस्थापत्तिः, अहेतुकत्वे च तद्वदेव कार्य्यमप्यहेतुकं कादाचित्कं स्यादित्यतआह 'अनादित्वात्'—इति। हेतोरपि कादाचित्कत्वं स्वहेतुकादाचित्कत्वादेव। प्रामाणिकी चेयमनवस्था वीजाङ्कुरवन्न दोषायेत्यर्थः।

ननु कारणमात्रसिद्धावप्येकमेकजातीयं वा कारणमस्तु कार्य्यजातस्य, तच्चास्मदादिनैव शक्यज्ञानमिति न तदर्थमुपदेशो (२) न वा विलक्षणसामग्रीजन्यं कार्य्यं सिध्यतीत्यतआह 'वैचित्र्यात्'। भिन्नजातीयकारणानन्तरं तथाभूतकार्य्यविषयकं प्रत्यक्षमेव विचित्रे साधने † मानमुपन्यस्तम्। यद्वा, वैचित्र्यं कार्य्यस्यविचित्रहेतुकत्वे

* सापेक्षात्,—इति सो० पुस्तके।
† वैचित्र्यसाधने,—इति ह० पुस्तके।

समयसंवन्धस्य हेतुत्वे पर्य्यवसानम्। यद्वा, उत्पत्तिगर्भउत्पत्तिघटकः किञ्चित्समयस्याद्यसमयः तत्संवन्धइत्यर्थे तत्रैव पर्य्यवसानम्, विसर्गशून्यपाठादित्याङ्कः। यद्यप्यत्रापि स्वरूपस्यैव तत्संवन्धत्वे तत्र च पूर्व्वमुत्पत्तिमत्वेनोत्पत्तेरित्यग्रिमग्रन्थविरोधस्तथापि स्वरूपातिरिक्तस्य संवन्धस्योत्पत्तिरूपत्वं तत्र चात्माश्रयादनवस्थानाच्च नोत्पत्तिमत्त्वमिति मताभ्युपगमानुसारेणेदम्,—इति मकरन्दः।

(१) असाधारणं स्यादिति अगमकं स्यादित्यर्थः,—इति मकरन्दः।

(२) ननु तद्ब्रह्मात्मकं प्रधानात्मकं वाऽतीन्द्रियं नास्मदादिना शक्यज्ञानमिति यदि ब्रूयात्तदा दोषान्तरमाह न वेति,—इति मकरन्दः।

न ह्ययं संसारोऽनेकविधदुःखमयो निरपेक्षो भवितुमर्हति । तदा हि स्यादेव न स्यादेव वा, न तु कदाचित् स्यात् ।

---

लिङ्गमेव । उभयत्राप्यभिन्नत्वाभिन्नजातीयत्वयोर्हेत्वोः(१) कार्य्यस्य भेदविजातीयत्वे आकस्मिके स्यातामिति तर्कः सहकारीत्यर्थः ।

तथापि दृश्यमानविचित्रहेतुकमेव कार्य्यमस्त्विति नादृष्टसिद्धिरित्यत आह 'विश्ववृत्तितः' । विश्वेषां प्रेक्षावतां परलोकार्थितया यागादौ प्रवृत्तिः प्रेक्षावत्प्रवृत्तित्वेन सफला, फलसाधनत्वञ्च यागादेराशुविनाशित्वेन* न स्यादिति तज्जन्यफलानुकूलमदृष्टं कल्प्यते इत्यर्थः ।

तथापि तददृष्टं भोग्यनिष्ठमुत भोक्तृनिष्ठम्? अन्त्येऽपि किं प्रतिभोक्तृनियतं साधारणं वा? इत्यत आह प्रत्यात्मेति । भुक्तेः सुखदुःखसाक्षात्कारस्य प्रत्येकात्मनियतत्वात् लाघवाच्च तदुपपादकं प्रतिभोक्तृ नियतमेवादृष्टं कल्प्यते इत्यस्ति हेतुरलौकिक इत्याद्यस्तवकार्थसंग्रहः ।

यथोक्तप्रत्यक्षानुमानयोरन्यथासिद्धिनिरासाय तर्कमाह न ह्ययमिति । अनेकविधेति मुमुक्षुवैराग्यार्थं कार्य्यवैचित्र्यस्फोरणार्थं वा ।

---

* विनाशित्वे,—इति सो० पुस्तके ।

---

(१) जातीयत्वयोर्हेतोरिति मकरन्दसम्मतः पाठः । तथाच मकरन्दसन्दर्भः । "हेतोरभिन्नत्वे अभिन्नजातीयत्वे वेत्यर्थः । हेत्वोरिति पाठेऽप्यर्थतः स एवार्थ इति ध्येयम्"—इति ।

तच्च विचित्रादृष्टसाधनोपयुक्तम्। निरपेक्षत्वञ्च किञ्चित्पदार्थावधिकोत्तरत्वव्याप्यकालसंबन्धित्वम्* । न च प्रतियोग्यप्रसिद्धिः, तस्यासत्ख्यातिवादिनः सांव्यवहारिकस्य सापेक्षत्वस्यापि† स्वीकारात् ।

ननु, निरपेक्षत्वेनैकेन व्याप्येन स्यादेव न स्यादेवेति रूपं‡ व्यापकद्वयं विरुद्धं कथमापाद्यते। न ह्येकं मिथोविरोधिद्वयव्याप्यम् । तु शब्दस्यासङ्गतः(१), कादाचित्कत्वाभावस्य स्वतन्त्रस्यैवानिष्टापादनार्थत्वात्§। अत्राहुः। निरपेक्षत्वेन कादाचित्कत्वव्यतिरेकएवापाद्यः, स च स्यादेव न स्यादेवेति पक्षद्वये(२)|| पर्य्यवस्यति। अतएव तु शब्दोऽपि सङ्गच्छते। (३)यद्वा, कार्य्यं यदि निरपेक्षं स्यात्, स्यादेव नित्यं स्यादाकाशवदिति स्वमते, तन्मते तु न स्यादेव केवलान्वय्यत्यन्ताभावप्रतियोगि स्यात् खपुष्पवत्, उभयत्र तु कादाचित्कत्वं न स्यादिति। यद्वा, एतदुत्तरकालानुत्पत्तिकोऽयं घटोयद्येतदुत्तरका-

* संबद्धत्वं,—इति से० पुस्तके ।
† सांव्यवहारिकस्यापि,—इति से० पुस्तके ।
‡ नस्यादेववेतिरूपं,—इति ह० पुस्तके ।
§ अनिष्टापादनत्वात्,—इति ह० पुस्तके ।
|| पक्षद्वयेपि,—इति ह० पुस्तके ।

(१) परस्पराङ्गाङ्गिभावस्य तुशब्दार्थत्वादिति भावः ।
(२) पक्षद्वये नित्यत्वालीकत्वयोरन्यतरपक्षे ।
(३) नन्वस्मन्मते नित्यत्वपक्षएव पर्य्यवस्यति न त्वलीकत्वे, असत्ख्यात्यनभ्युपगमे सांव्यवहारिकस्यापि तस्यानभ्युपगमादित्यरुचेराह यद्वेति,—इति मकरन्दः ।

त्वानुत्पत्तिकत्वे सत्येतत्पूर्व्वकालोत्पत्तिकानपेक्षोत्पत्तिकः* स्यादे-
तत्पूर्व्वकालवृत्तिः स्यात्(१)। यद्वा, यद्ययमेतत्कालीनोत्पत्तिको-
घटः(२) सहेतुकोन स्यादेतत्पूर्व्वकालीनः स्यात्।

यद्वा, घटोयदि घटव्यवहितकालानधिकरणपदार्थाधिकरणक्ष-
णोत्तरत्वव्याप्योत्पत्तिर्न स्यात् घटव्यवहितकालः स्यात्(३) तत्काल-
वृत्तिघटादिवदिति तत्र तत्र सत्त्वापादनं† स्यादेवेत्यस्यार्थः।

* पूर्व्वकालोत्पत्तिकालानपेक्षोत्पत्तिकः,—इति ह० पुस्तके।
† सत्त्वापादनमिति,—इति शो० पुस्तके।

(१) एतदुत्तरकालेति एतच्च पक्षविशेषणमुत्तरकालोत्पन्नघटांशे आपा
दकासिद्धिवारणाय। पूर्व्वकालीनघटे चांशतः सिद्धसाधनवारणाय
अयमिति। पूर्व्वकालीनावृत्तिरित्यर्थः। ** उत्तरकालोत्पत्तिके
व्यभिचारादाह सत्यन्तम्। एतद्घटसमयोत्पत्तिकघटादौ व्यभि-
चारादाह एतत्पूर्व्वकालेति। अव्यवहितपूर्व्वकालेत्यर्थः। तथाच
चिरतरकालोत्पन्नोऽत्र दृष्टान्तः, अन्यथा यथाश्रुतस्याप्रसिद्ध्या
तदसिद्धेरित्यवधेयम्। तेनापि तादृशकालाद्यपेक्षणात् दृष्टान्तासि-
द्धिरेवेत्यतआह प्रथमसुत्पत्तिपदं, चरमसुत्पत्तिपदं चिन्त्यम्।
**वस्तुतस्तु नञ्व्यत्यासेन तत्पूर्व्वकालोत्पत्तिकसापेक्षोत्पत्ति-
कत्वाभावो विवक्षितः। तथाच नाव्यवहितत्वविवक्षा नवा अख-
ण्डाभावे व्यर्थत्वप्रसङ्ग नचानित्यस्य दृष्टान्तत्वे तदसिद्धिः,—इति
मकरन्दः।

(२) पूर्व्वकालोत्पत्तिके इष्टापत्तिवारणाय एतत्कालीनोत्पत्तिकइति
पक्षविशेषणम्।

(३) घटव्यवहितकालानधिकरणत्वं घटाव्यवहितकालाधिकरणत्वं पर्य्य-
वस्यति। यत्तु आकाशादेरपि तथात्वे तदादायापादकासिद्धिः स्या
दिति घटव्यवहितकालानधिकरणत्वं यथाश्रुतमेवाभिमतमिति।
तन्न, अनन्यथासिद्धस्य पदार्थविशेषणस्यावश्यकत्वात्। अन्यथा

अन्यकालानुत्पत्तिकोऽयं घटोयद्येतत्पूर्वकालानपेक्षोत्पत्तिकः स्यात् एतत्कालोत्पत्तिकोन स्यात्(१)। यद्वा,(२) सकलकालावृत्तिरयं घटो यदि निरपेक्षः स्यात् किञ्चित्कालावृत्तित्वे सति किञ्चित्कालवृत्तिर्न स्यात्। तेन पक्षविशेषणमहिम्नाऽलीकत्वं सिध्यति(३)। यद्वा,(४) एतावत्कालपूर्वापरकालावृत्तिर्घटो यद्येता-

---

दण्डरूपादिकमादाय दोषतादवस्थ्यापत्तेः। तस्मादुभयमप्यदोषइति। रासभाद्युत्तरत्वसामानाधिकरण्याद्विपर्य्ययानुमाने कारणत्वं न सिद्धेदिति व्याप्यत्वपर्य्यन्तम्। न चानन्यथासिद्धत्वेनैव तद्धारणमिति वाच्यं रासभादेरपि तथात्वात्। अन्यथा कारणतालक्षणे नियमांशोपादानमनर्थकं स्यात्। तत्रच तस्याविवक्षितत्वे प्रकृतेऽपि तथाऽस्त्विति। प्रतियोगी च परस्यासत्ख्यात्युपनीतइति स्मर्त्तव्यम्। घटव्यवहितकालत्वं घटानधिकरणकालवृत्तित्वमापाद्यम्,—इति मकरन्दः।

(१) अन्यकालोत्पत्तिके इष्टापत्तिवारणाय अन्यकालानुत्पत्तिकइति पक्षविशेषणम्। उत्तरकालोत्पत्तिकोऽत्र दृष्टान्तः।

(२) सकलेति एतच्च पक्षविशेषणं नित्यत्वेनेष्टापत्तिवारणाय। अलीकत्वे व्यभिचारवारणाय अयमिति। प्रामाणिकइत्यर्थः। किञ्चित्कालवृत्ति र्न स्यादित्येव कृते व्योमादौ व्यभिचारइत्यतआह किञ्चिदिति। प्राक्कालावृत्तित्वे सतीत्यर्थः। तेन प्रागभावे न व्यभिचारः। यद्यपि सत्यन्तमेव समर्थमिति व्यर्थविशेष्यत्वं, तथाप्यखण्डाभावआपाद्यइति ध्येयम्,—इति मकरन्दः।

(३) विशिष्टाभावउभयथा सकलकालवृत्तितया सकलकालावृत्तितया च। तत्राद्यस्य पक्षविशेषणमहिम्ना अभावे द्वितीयस्य पर्य्यवसानम्। तच्चानिष्टमिति सापेक्षत्वसिद्धिः,—इति मकरन्दः।

(४) एतावदिति पूर्वापरकालमात्रवृत्तिघटांशे सिद्धसाधनवारणाय पक्षविशेषणम्। एतावत्कालवृत्तौ तत्पूर्वकालोत्पन्ने व्यभिचारादाह सत्यन्तम्। एतावत्पदं कालविशेषणमत्रासिद्धिवारकम्। तत्कालापेक्षे घटादौ सत्यन्तमात्रं व्यभिचारीत्यतआह एतत्कालव्यव-

## अकस्मादेव भवतीति चेन्न,

---

तत्कालपूर्व्वकालावृत्तित्वे सति एतत्कालाव्यवहितपूर्वकालवृत्तिपदार्थाधिकरणक्षणोत्तरत्वव्याप्यकालीन स्यादेतावत्कालवृत्तिर्न स्यादिति* न स्यादेवेत्यस्यार्थः । अतएव कालान्तरावृत्तित्वे सत्येतत्कालवृत्ति स्यादिति कादाचित्कत्वाभावापादनमपीति सम्प्रदायविदः ।

कार्य्यकारणभावग्राहक-माने, कादाचित्कभावो † निर्हेतुकोभावत्वात् व्योमवदिति सत्प्रतिपक्षं शङ्कते अकस्मादिति । अत्र किंशब्दो यदा हेतुमात्रपरः, तदा तस्य नञा संवन्धाद्धेत्वभावे भवनं लभ्यते । यदा तु भवनक्रियायानञा संवन्धः, तदा प्रसज्यप्रतिषेधे भवननिषेधोऽर्थः । किंशब्द-समस्यमानेनापि नञा भवतीत्यस्यान्वयात् । असामर्थ्येऽप्यसूर्य्यम्पश्या राजदारादृति वत्समासः । अ-शब्दस्यैव वाऽयं समासं बिना प्रयोगः "अ मा नो ना प्रतिषेधवचनाः"—इति कोषात् ।

---

* कालावृत्ति र्नस्यादिति,—इति सो० पुस्तके ।

† कादाचित्काभावो,—इति सो० पुस्तके ।

---

हितेत्यादि । ननूत्तरकालोत्पत्तिकएवात्र दृष्टान्तः अन्यथापादकवैयर्थ्यात् तत्र च तत्पूर्व्वकालवृत्तिनित्यादिसापेक्षत्वादापादकवैकल्यमित्यतआह अव्यवहितेति । नन्वृत्त्यासेनैतत्कालाव्यवहितपूर्व्वकाला वृत्तीत्यर्थः । नित्यन्तु व्यवहितेपि वर्त्तते इत्यदोषः,—इत्यादि मकरन्दसन्दर्भोऽत्रानुसन्धेयः ।

हेतुभूतिनिषेधोन स्वानुपाख्यविधिर्न च।
स्वभाववर्णना नैवमवधेर्नियतत्वतः॥ ५॥

हेतुनिषेधे भवनस्यानपेक्षत्वेन* सर्वदा भवनमविशेषात्। भवनप्रतिषेधे प्रागिव पश्चादप्यभवनम-

---

तदुभयं निरस्यति हेतुभूतीति। अथ हेतुभवनयोर्निषेधस्य(१) शेषाभ्यनुज्ञाफलकत्वात्, पर्य्युदासनञा हेतुव्यतिरिक्ताद्भवनं लभ्यते†, अहेतुस्य कार्य्यस्वरूपमवस्तु च, तदा स्वानुपाख्यविधिः, तं निषेधति स्वानुपाख्येति। स्वं कार्य्यम्। अनुपाख्योनिर्द्धर्म्मकोऽलीकः। अथाश्वकर्णादिवद्व्युत्पन्नएवायमकस्माच्छब्दः किंशब्दोऽस्वभावपरो वा, तदा स्वभावादेव कार्य्यस्य कादाचित्कत्वमित्यर्थः, तत्राह स्वभावेति। सर्व्वत्र हेतुमाह अवधेरिति। नियतावधिसंवन्धित्वेनैव विवादपदस्य कादचित्कस्य कार्य्यस्य सतर्केण प्रत्यक्षेण विषयीक्रियमाणत्वादित्यर्थः। क्रमेण तर्कमेवाह‡ हेत्विति। भवनस्य सत्त्वस्याविशेषात्(२) सदातनत्वे कार्य्यस्य कादाचित्कत्वव्याघातइत्यर्थः। भवनेति। भवनस्य उत्पत्तेः सदा§ प्रतिषेधे प्राक् पश्चादिव मध्येऽप्य-

---

* भवनस्यानपेक्षत्वे,—इति का० पुस्तके।

† लभ्यते,—इति नास्ति सो० पुस्तके।

‡ तर्कमाह,—इति ह० पुस्तके।

§ सदोत्पत्तेः,—इति सो० पुस्तके।

---

(१) यद्यपि हेतुतोयद्भवनं तस्यैव विशिष्टस्यैकस्य निषेधात्तल्लभ्यते,—इति द्विवचनमयुक्तं, तथापि विशिष्टमपि तदुभयात्मकमेवेति यथोक्तम्,—इति मकरन्दः।

(२) हेतुनिषेधे भवनमुत्पत्तिरूपं न सम्भवतीत्यसत्त्वपरतया व्याख्यातम्।

वृत्ति।

विशेषात् । उत्पत्तेः पूर्वं स्वयमसतः स्वोत्पत्तावप्रभुत्वेन स्वस्मादिति पक्षानुपपत्तेः । पौर्वापर्य्यनियमस्य कार्य्यकारणभावः । न चैकं पूर्व्वमपरञ्च, तत्त्वस्य भेदाधिष्ठानत्वात् । अनुपाख्यस्य हेतुत्वे प्रागपि सत्त्वप्रसक्तौ पुनः सदातनत्वापत्तेः ।

---

भवनप्रसङ्गात् कदाचिद्भवनग्राहिप्रत्यक्षबाधइत्यर्थः । उत्पत्तेरिति स्वोत्पत्तेः पूर्वं यदि स्वं भवेत्, तदा नियतकालोत्पत्तौ हेतुः स्यात्, न चैवम् । असतोऽपि हेतुत्वे प्राक् पश्चादपि कार्य्यसत्त्वप्रसङ्गेन तदनुपलब्धिविरोधइत्यर्थः । कार्य्यकारणयोरभेदे विरोधान्तरमाह पौर्वापर्य्येति । पटार्थिनः पटमेव नोपाददते किन्तु तत्पूर्वकालवर्त्तिनस्तन्तूनिति लोकव्यवहारसिद्धकार्य्यकारणभावविरोधइत्यर्थः । तत्त्वस्य पौर्वापर्य्यस्येत्यर्थः । अनुपाख्यस्यार्थक्रियाजनकत्वाभावेऽप्यनिष्टप्रसङ्गान्तरमाह अनुपाख्यस्येति । एतत्पटानुत्पत्तिक्षणो यद्येतत्पटोत्पादकानुपाख्योत्तरक्षणः स्यादेतत्पटाधिकरणं स्यादित्यर्थः । यद्यपि स्वभावः कार्य्यं तद्धर्म्मोवा, आद्यः अकस्मादिति निरासेनैव निरस्तः, अन्त्ये धर्म्मस्य कारणत्वमङ्गीकृतमेव, तथापि यथा परमाणुतत्परिमाणयोरकारणत्वेऽपि* स्वभावादेव नियतदेशवृत्तित्वं(१),

---

* परमाणुतत्परिमाणयोरकारणत्वेपि,—इति पाठोभवितुं युक्तः ।

---

(१) अकारणत्वेपीति कारणत्वाविशेषेपीत्यर्थः । नियतेति परमाणोर्देशत्वमपरस्य तद्वृत्तित्वमपि स्वभावादेव यथा नियमइति भावः । नियतदेशवृत्तित्वं नियतसंवन्धित्वं विवक्षितमित्यन्ये,—इति मकरन्दः ।

स्यादेतत्, नाकस्मादिति कारणनिषेधमात्रं वा, भवनप्रतिषेधो वा, स्वात्महेतुकत्वं वा, निरुपाख्यहेतुकत्वं वा, ऽभिधित्सितमपित्वनपेक्ष्यएव कश्चिन्नियतदेशवत् * नियतकालस्वभावइति ब्रूमः ।

निरवधित्वेऽनियतावधिकत्वे वा कादाचित्कत्वव्याघातात् ।

---

यथा वा कारणत्वाविशेषेऽपि पटस्य तन्तुदेशवृत्तित्वं न तु वेमादिदेशवृत्तित्वमिति स्वभावादेव नियमः, तथा कार्य्यस्याहेतुकत्वेऽपि तत्तत्कारणत्वाभिमतनियतोत्तरकालवृत्तित्वं न तु कालान्तरवृत्तित्वमिति स्वभावादेव कादाचित्कत्वं स्यादिति शङ्कते अपित्विति। ये ये निरवधयोदृष्टास्तेषां नियमेन कादाचित्कत्वस्वभावविरहात् निरवधिकत्वकादाचित्कयोर्विरोधान्निरवधिकत्वे कादाचित्कत्वस्वभावएव(१) न निर्वहेदित्यभिप्रेत्य परिहरति निरवधित्वे इति। अयं तृणीयद्येतत्पटध्वंसानाश्रयः सन्नेतत्पटप्रागभावाश्रयो न स्यादेतत्पटाधिकरणं स्यादिति भावइत्यन्ये ।

---

* नियतदेशस्वभाववत्,—इति आ० पुस्तके ।

---

(१) अकादाचित्कत्वमाकाशादिषु न तत्तद्धर्म्माधीनमननुगमादिति निरवधित्वनिवन्धनमेव मन्तव्यमन्यत्रान्यस्यासम्भवादिति परस्परविरोधावधारणेन निरवधित्वे कादाचित्कत्वस्वभावविरोधइति भावः,—इति मकरन्दः ।

नह्युत्तरकालसिद्धित्वमात्रं कादाचित्कत्वं किन्तु प्रागसत्त्वे सति। सावधित्वे तु सएव प्राच्योहेतुरित्युच्यते। अस्तु प्रागभावएवावधिरिति चेन्न, अन्येषामपि तत्काले सत्त्वात्। अन्यथा तस्यैव निरूपणानुपपत्तेः। तथाच न तदेकावधित्वमविशेषात्।

ननूत्तरकालसंसर्गित्वं कादाचित्कत्वं तच्च निरवधित्वेऽप्याकाशवत्स्यादित्यतआह न हीति। तथा सति घटाकाशयोः कादाचित्कत्वाकादाचित्कत्वलोकव्यवहारविरोधइति भावः*। न च सावधित्वेऽपि न हेतुमत्त्वस्वीकारः, पर्य्यायत्वादनयोरित्याह सावधित्वे त्विति। नन्वेतावताऽपि प्राचीनोऽवधिः प्रागभावएव न तु भावोऽपीति सएव हेतुर्न भावइति न प्रागभावातिरिक्ते कारणत्वं वर्त्तते† इति शङ्कते अस्त्विति। किं प्रागभावकाले भावस्यासत्त्वादेवानवधित्वं कार्य्येणानपेक्षितत्वाद्वा? आद्यं परिहरति अन्येषामपीति। भावानामपि अनन्यथासिद्धान्वयव्यतिरेकवत्तया प्रागभावतुल्यत्वादवधित्वमन्यथा प्रागभावस्यापि तन्नस्यादितिभावः। अन्यथेति अनिरूपितस्य प्रागभावस्य प्रतिपादयितुमशक्यत्वादवश्यं घटादिप्राक्कालेऽनन्यथासिद्धान्वयव्यतिरेकिणः कपालादयस्तन्निरूपकाः स्वीकार्य्याइत्यर्थः। ननु प्रागभावनिरूपकस्य चक्षुरादेर्न कारणत्वं यथा तथा तन्निरूपकभावान्तरस्यापि, न च प्रागभावः प्रतियोगिसमवा-

---

* कादाचित्कत्वाकादाचित्कत्ववैलक्षण्यात् लोकव्यवहारविरोध इति भावः,—इति छ० पुस्तके।

† न प्रागभावातिरिक्तकारणत्वं, इति सो० पुस्तके।

**इतरनिरपेक्षस्य प्रागभावस्यावधित्वे प्रागपि तदवधेः कार्य्यसत्त्वप्रसङ्गात् ।**

---

यिकारणमात्रनिरूप्यस्तच्च कारणमेवेति[१] युक्तं, शब्दाभावप्रत्यक्षतायां तस्य[२] निरस्तत्वात् । मैवं, चक्षुरादेरधिकरणग्रहणएवान्यथासिद्धत्वात्, चक्षुरादिव्यापाराभावेऽप्यनुमितेऽधिकरणे* प्रागभावप्रतीतेरिति भावः[३] । अत्रैवार्थे कादाचित्कत्वव्याघातं प्रागुक्तं विपक्षबाधकं† स्मारयति इतरेति । [४]यद्ययं घटः प्रागभावान्यावधिकोन स्यात्

---

* प्यनुमितेरधिकरणे,—इति ह० पुस्तके ।

† विपक्षबाधकाभावं,—इति सो० पुस्तके ।

---

(१) अधिकरणत्वेन प्रागभावनिरूपकत्वं कारणत्वव्याप्यमिति भावः ।

(२) प्रतियोगिसमवायिकारणमात्रनिरूप्यत्वस्य ।

(३) तथाच न चक्षुरादेः प्रागभावनिरूपकत्वं, यस्य तु तन्निरूपकत्वं कपालादेस्तस्य हेतुत्वमेवेति नोक्तदोषइत्यर्थः । “नन्विदमनुपलब्धिगम्याभाववादिनये अस्माकन्तु चाक्षुषएवाभावइत्यपसिद्धान्तः”,—इत्यादिः, “अत्रब्रूमः । अधिकरणत्वेन प्रागभावनिरूपकस्य तत्प्रतियोगिजनकत्वमिति नियमः कपालादेस्तथात्वात् तज्जनकत्वं न चक्षुरादेरित्यत्र तात्पर्य्यं निरूपकत्वञ्च प्रत्यक्षनिरूपणएवेत्यवधेयम् । नच तत्राप्यधिकरणस्य न निरूपकत्वं किन्तु तद्बुद्धेरिति वाच्यं प्रयोजकत्वमात्रस्यैव विवक्षितत्वात् । नच प्रतियोगिसमवायिभिन्नस्य देशकालादेरपि तन्निरूपकत्वाभ्युपगमाद्व्यभिचारइति वाच्यं तस्यापि हेतुत्वाभ्युपगमात् । नष्टदेशकालयोः का गतिरिति चेन्न तयोरपि स्वरूपयोग्यत्वात् । वस्तुतोऽधिकरणत्वे निरूपकजातीयं किञ्चिदवश्यं कारणमिति नियमः”—इत्यन्तोमकरन्दसन्दर्भोऽत्रानुसन्धेयः ।

(४) वैयधिकरण्यादन्यथा तर्कमाह यद्ययमिति । न च विशिष्टाभाव घटितापादकसत्त्वेन प्रागभावेन व्यभिचारः, अनादिः स्यादित्यर्थात् ।

सन्तु ये केचिदवधयो न तु तेऽपेक्ष्यन्ते इति स्वभावार्थइति चेत्। नापेक्ष्यन्ते इति कोऽर्थः, किं न नियताः, आहोस्विन्नियता अप्यनुपकारकाः? प्रथमे धूमोदह-

सकलकालीनः स्यादित्यर्थः। द्वितीयं शङ्कते सन्त्विति। प्रागभावादन्येषामवधित्वेऽपि तैर्घटादिसत्तायाअनियमनान्न तानि कारणानीत्यर्थः। प्रथमइति, ननु योदहनव्यभिचारी स रासभानन्तरं भवतीत्यत्रापादकाभावः स्वयमपि व्याप्तेरनभ्युपगमात्। न च धूमत्वं यदि दहनव्यभिचारिवृत्ति स्यात्[१] दहनासमवहितसामग्र्युत्तरकालोत्पत्तिकवृत्ति स्यादित्यर्थः, [२]परस्येष्टापत्तेः। मैवं, धूमोयदि रासभसमवधानोत्पत्तिकतावच्छेकरूपवान् स्यात् रासभसमवधानानन्तरोत्पत्तिकः स्यात्[३], धूमत्वं वा यदि दहनव्यभिचारिवृत्ति स्यात्

अतएव मूले प्रागपीत्येवोक्तम्। भावत्वमापादके विशेषणमित्यन्ये। न च नित्यत्वमुपाधिः, तस्याप्यापाद्यत्वादिति भावः। यद्यपि चार्वाकमते सकलकालीनत्वमप्रसिद्धं आकाशादेरपि क्षणिकत्वात्, तथापि नैयायिकमतेनेदं बोध्यम्—इति मकरन्दः।

(१) न च परमाणुत्वादौ व्यभिचारः जन्यवृत्तित्वे सतीत्यापादकविशेषणादित्याङः। तन्न परमाणुधूमत्वान्यतरत्वादौ व्यभिचारात्। तस्माद्दहनव्यभिचारिभूतजन्यवृत्तिः स्यादित्यापादकमिति नोक्तदोषः—इति मकरन्दः।

(२) दहनासमवहितत्वं तदसहकृतत्वं तदघटितत्वं वा अभिप्रेत्याह परस्येति,—इति मकरन्दः।

(३) ननु धूममात्रपक्षत्वे आपादकासिद्धिः धूममात्रस्य तत्समवधानानन्तरोत्पत्तिकत्वाभावेन धूमत्वादेस्तदनवच्छेदकत्वात्। रासभोत्तरभाविधूमस्य पक्षत्वे सिद्धसाधनं तद्धूमत्वावच्छिन्नस्य तथा भावादिति चेत्। मैवं धूमस्य दहनसमवधानोत्तरोत्पत्तिकत्वनियमेऽपि दहनस्य

नवङ्गर्दभमप्यवधीकुर्य्यात्, नियामकाभावात्। द्वितीये तु किमुपकारान्तरेण, नियमस्यैवापेक्षाऽर्थत्वात्, तस्यैव च कारणात्मत्वात्, ईदृशस्य च स्वभाववादस्येष्टत्वात्। नित्यस्वभावनियमवदेतत्, न ह्याकाशस्य तत्त्वमाकस्मिकमिति सर्वस्य किं न स्यादिति वक्तुमुचित-

---

दहनासमवहितदेशवृत्ति स्यादित्यापादनार्थत्वात्(१) वस्तुतो यद्यग्निर्धूमकारणं न स्यात्, तदा कथं धूमार्थी नियमतोऽग्निमुपादत्ते न रासभमिति तद्ग्राहि* प्रत्यक्षव्याघातइति भावः।

द्वितीये त्विति न ह्युपकारव्याप्ता कारणता येन तदभावे न स्यात्, उपकारेऽपि† कर्त्तव्ये उपकारान्तरापेक्षयाऽनवस्थितेः‡ किन्तु स्वरूपविशेषव्याप्ता, तन्निवृत्तावेव निवर्त्तते इत्यर्थः।नियमस्यैवेति नियतान्वयव्यतिरेकवज्जातीयस्यैवापेक्षणीयपदवाच्यतया लोकप्रसिद्धत्वादित्यर्थः। नित्यस्वभावेति यथा नित्यस्याकाशस्य यः स्वभावोधर्म्मः

---

* तद्ग्राहक,—इति ह० पुस्तके।
† उपकारान्तरेऽपि,—इति ह० पुस्तके।
‡ उपकारान्तरापेक्षायामनवस्थितेः,—इति ह० पुस्तके।

---

वदनियतं परेणाभिप्रेतमिति तदव्यभिचारित्वमेव तदुत्तरोत्पत्तिकतावच्छेदकत्वेन पराभिप्रेतमिति धूमपक्षत्वेऽप्यदोषइत्याहुः। केचित्तु एतदक्षरसादेवाह धूमत्वं वेति,—इति मकरन्दः।

(१) ननु कश्चिद्धूमोवह्निं विनापि रासभादेव जायते इत्यभ्युपगन्तुरिष्टापादनं स्यादित्यतआह वस्तुत इति। तथा च व्याघातान्न तथाभ्युपगम इति भावः।

मिति चेन्न, सर्व्वस्य भवतः स्वभावत्वानुपपत्तेः। नह्ये-

ग्व्दाश्रूत्वमात्मनस्यात्मत्वमाकस्मिकमिति सर्व्वस्य तदन्यस्यापि धर्मः कुतोन स्यादिति न वक्तुमुचितमप्रामाणिकत्वात्, तथा आकस्मिकत्वाविशेषेऽपि सदातनत्वमाकाशादीनां कादाचित्कत्वं घटादीनां स्वभावोन त्वन्यस्य धर्मोऽन्यस्येत्यर्थः। यथाऽऽहुः,

"नित्यसत्त्वाभवन्त्येके नित्यासत्त्वाश्च केचन।
विचित्राः केचिदित्यत्र तत्स्वभावोनियामकः॥
वह्निरुष्णोजलं शीतं समस्पर्शस्तथाऽनिलः।
केनेदं रचितं तस्मात् स्वभावात्तद्व्यवस्थितिः"—इति।

न च, नियतदेशवन्नियतकालस्वभावः,—इत्यनेनास्य पौनरुक्त्यं ; पूर्वं हि सापेक्षत्वादित्यत्र यथा परमाणुतत्परिमाणादीनां निरपेक्षत्वेऽपि नियतदेशवृत्तित्वं तथा घटादीनां नियतकालत्वं स्यादित्यप्रयोजकत्वमुक्तं, सम्प्रति तु कादाचित्कत्वस्वभावोनिर्हेतुकः (१)स्वभावनियतत्वात् नित्यस्वभाववदिति सत्प्रतिपक्षत्वमुक्तमित्यर्थभेदात्। पूर्वं यन्नियतं तन्न कारणनियम्यं यथा जातेः काचित्कत्वमित्युक्तं, सम्प्रति तु स्वभावोन नियम्यइत्युच्यते,—इत्यपौनरुक्त्यमित्यन्ये। न सर्वस्येति एकनियतोधर्मः स्वभावइत्युच्यते, तद् यदि सर्वस्य सम्भवेत् तदा

(१) स्वभावनियतत्वादिति, अत्र नियतपदं चिन्त्यम्।

कमनेकस्वभावं नाम, व्याघातात्। नन्वेवमिहापि सर्वदा भवतः कादाचित्कत्वस्वभावव्याघातइति तुल्यः परिहारः। न तुल्यः, निरवधित्वे अनियतावधित्वे वा

---

स्वभावत्वमसाधारणत्वं नोपपद्यते सत्तादेरिवेति स्वभावत्वव्याघातादित्यर्थः। नन्वेवमिति यद्याकाशस्याकाशत्वं न सर्वस्य (१)तत्त्वव्याघातादिति विपरीतमनाशङ्कनीयं, तदा कादाचित्कत्वस्वभावस्याहेतुकत्वे सदातनत्वमप्यनाशङ्कनीयं कादाचित्कत्वस्वभावभङ्गप्रसङ्गादित्यर्थः। कादाचित्कत्वस्वभावसिद्धौ तद्विपरीतकल्पनायां व्याघातः स्यात्, तत्सिद्धिश्च निरवधित्वस्वभावत्वे वा सावधित्वस्वभावत्वे वा प्रकारान्तराभावात्, द्वितीयेऽप्यनियतावधित्वे तद्विपर्यये* वा, तत्र प्रथमद्वितीययोराह निरवधित्वइति। ये ये निरवधयो(२)ऽनियतावधयश्च भावाद्दृष्टाः,

---

* नियतावधित्वे,—इति से० पुस्तके पाठः।

---

(१) तत्त्वेति स्वभावत्वव्याघातादित्यर्थः।

(२) अनियतावधयश्चेति, यद्यपि अवधित्वं कारणत्वं नियतस्यैवेत्यनियतावधित्वमप्रसिद्धं, प्रसिद्धत्वे वाऽऽकाशादेरवधित्वमात्रस्याभावाद्वृष्टादावेव तदभ्युपगमइति तेषां कादाचित्कत्वस्वभावविरहादिति विरुद्धम्; तथापि नियतावधिशून्यत्वे तात्पर्य्यं, विशिष्टाविशिष्टप्रतियोगिकत्वे च न भेदइत्याहुः। अनियतावधिपदेन शशशृङ्गादयस्तन्मतेनोक्ता इत्यन्ये।

**कादाचित्कत्वव्याघातात्। नियतावधित्वे हेतुवादाभ्युपगमात्।**

---

तेषां नियमतः कादाचित्कत्वस्वभावविरहात्, निरवधिस्वभावस्य अनियतावधिस्वभावस्य वा कादाचित्कत्वस्वभावविरोधः, (१)न हि विरुद्धयोरुष्णशीतयोरेकस्वभावत्वं, तथा च कादाचित्कत्वव्याघातस्तत्स्वभावत्वव्याघातइत्यर्थः।

तृतीयमाशङ्क्य सम्प्रतिपत्तिमुत्तरमाह नियतावधित्वइति। वस्तुतोऽस्मिन् सतीदं भवति असति न भवतीति प्रत्यक्षेण नियतपूर्वभावस्य ग्रहात् प्रत्यक्षमेव कारणत्वे मानं, तस्य चानन्यथासिद्धत्वग्राहकस्तर्कः स्यादेवेत्यादिना दर्शितइति रहस्यम्।

(२)ननु कादाचित्कत्वं सापेक्षनिरपेक्षाभ्यां व्यावृत्तत्वेनासाधारणं,

---

(१) न हीति, यद्यपि यथा विरुद्धयोरपि प्रमेयैकस्वभावत्वं तथा कादाचित्काकादाचित्कयोरपि निरवधिस्वभावत्वमविरुद्धम्, तथापि तत्तत्कार्य्यार्थिं तत्तत्कारणोपादानानुपपत्त्या सावधित्वसिद्धिरिति भावः।

(२) अनादित्वादित्यस्य परिहारस्यासङ्गतत्वनिरासार्थमाशयं पूरयति नन्विति। तथाचाशयस्थितानवस्थापरिहारपरत्वेन तत्सङ्गतिरिति भावः। नन्वनवस्थाभयात् प्रागभाववन्निरपेक्षाऽपि सामग्री कादाचित्कीत्यनेन विपक्षगामितया साधारणानैकान्तिकप्रदर्शनात् कथमसाधारण्यं, अतएव परिमले तदेवोक्तमिति चेत्। मैवम्, अनवस्थाभिया सामग्री निरपेक्षा आकाशादिवन्न कादाचित्की, तथाच निरपेक्षसामग्रीरूपविपक्षाद्यावृत्तिरुक्ता, आकाशादिविपक्षव्यावृत्तेस्तु स्फुटत्वादप्रदर्शनं, निरपेक्षसामग्रीसापेक्षं कार्य्यमप्यकादाचित्कमिति सपक्षाद्यावृत्तं कादाचित्कत्वमसाधारण्यं स्यात्, तथाच

स्यादेतत्, उत्तरस्य पूर्व्वः पूर्व्वस्योत्तरो मध्यमस्योभयमवधिरस्तु, दर्शनस्य दुरपह्नवत्वात्। त्वयाऽप्येतदभ्यु-

---

तथा हि, न सामग्रीनिरपेक्षं कार्यं सदातनत्वापत्तेः, नापि तत्सापेक्षं; सामग्र्यपि हि न तन्निरपेक्षा तत्सदातनत्वे तत्कार्यसदातनत्वापत्तेः, नापि तत्सापेक्षा अनवस्थानात्, ततः प्रागभाववत् यथा सामग्री निरपेक्षाऽपि कादाचित्की तथा भावोऽपि घटादिः स्यादित्याशयवानाह स्यादेतदिति। उत्तरस्य ध्वंसस्य पूर्व्वो घटएवावधिर्न तु ध्वंसः, पूर्व्वस्य तु प्रागभावस्य उत्तरः प्रतियोग्येवावधिर्न तु प्रागभावः, मध्यमस्य तु घटादेः प्रागभावोध्वंसश्चेत्युभयमवधिर्निरूपकोऽस्त्वित्यर्थः। दर्शनस्येति सर्वलोकसिद्धत्वादित्यर्थः। दर्शनेन चेत्कारणं

---

तद्भयेन निरपेक्षस्यापि कादाचित्कत्वस्वीकारेण साधारणानैकान्तिकतया नायं हेतुः सापेक्षत्वसाधकइत्याशयवानाहेत्यत्र तात्पर्य्यात्। न च प्रागभावरूपविपक्षव्यावृत्तत्वाभावान्नासाधारण्यं स्यादिति वाच्यं प्रागसत्त्वादिघटितकादाचित्कत्वस्य प्रागेव निरुक्तेः। तद्विपक्षत्वानिश्चयदशायां वा तथात्वात्। यद्यप्येवं पक्षवृत्त्यपि न कादाचित्कत्वमित्यप्रसिद्धं नत्वसाधारण्यं, तथापि विभ्रमादर्शनदशायां तदित्येके। अगमकत्वमेव तेनोपलक्षितमित्यन्ये। केचित्तु अ-साधाधारणमित्यत्र अ-पदं निषेधवाचकं विभिद्य व्यावृत्तिपदेन योजनीयं, तथाच सपक्षविपक्षाभ्यामवृत्तेः साधारणमित्यर्थः, अतएव साधारणमेवाग्रे व्युत्पादितम्, तथाच परिमलसंवादोऽपीति वदन्ति। सामग्र्याः सापेक्षत्वेऽनवस्था, निरपेक्षत्वे व्यभिचारादसाधारण्यं न पक्षदृष्टान्तसाधारणमव्याप्यमिति यावदित्यर्थइत्याहुः।

पगन्तव्यं, न हि भाववदभावेऽप्युभयावधित्वमस्ति। तद्व-
द्भावेष्वप्यनुपलभ्यमानैकैककोटिषु स्यात्। न स्यात्, अ-
नादित्वात् ॥

प्रवाहोऽनादिमानेष न विजात्येकशक्तिमान्।

---

सिद्ध्यति, तदा क्षित्यादौ कर्तुरदर्शनाद्धर्मादेरप्यदर्शनात्तदसिद्धौ न तदधिष्ठातृसिद्धिरिति निगर्वः। अनङ्गीकारे दण्डमाह न हीति। अन्यथा प्रागभावप्रध्वंसयोरप्यनुपलभ्यमानपूर्वोत्तरावधिकल्पनप्रसङ्ग इति भावः। तद्वदिति तथा च अवधिसिद्धावपि न तत्प्राच्यत्वनियमसिद्धिरिति न तावतैव कारणसिद्धिरंशतः(१) सिद्धिसाधनं चेति भावः। प्रवाह इति एष कार्यकारणप्रवाहोऽनादिमान् (२)तत्तत्सामग्रीमान् तत्तत्सामग्र्यपि स्वसामग्रीपरम्पराऽधीनेति न तज्जन्यकार्यस्यानादित्वप्रसङ्गः। नचानवस्था, वीजाङ्कुरवदनादितया प्रमाणिकत्वादित्यर्थः। प्रागभावध्वंसयोस्तु पूर्वोत्तरकोटिकल्पने भावोन्मज्जनमेव वाधकमिति भावः। (३)अनादित्वं च ध्वंसव्याप्यप्रागभावप्रति-

---

(१) अंशत इति अवधेर्मयाऽपि स्वीकारेण तदंशस्य सिद्धस्यैव साधनादित्यर्थः।

(२) तत्तदिति तथाच नासाधारण्यमित्यर्थः।

(३) ननु वीजाङ्कुरादेः सादितया कथमनादित्वमित्यतआह अनादित्वञ्चेति। ध्वंसव्याप्यत्वं सजातीयध्वंसव्याप्यत्वम्। तथाच, तद्घटत्वेन सादित्वेऽपि घटत्वेन तद्घटस्याप्यनादित्वमिति ध्येयम्। व्याप्तिश्च कालगर्भा।

तत्त्वे यत्नवता भाव्यमन्वयव्यतिरेकयोः ॥ ६ ॥

प्रागभावो ह्युत्तरकालावधिरनादिः, एवं भावोऽपि घटादिः स्यात्। अनुपलभ्यमानप्राक्कोटिकघटादिविषयं

योगित्वम्। तथापि यद्व्यक्तितो यत्कार्यं सैव व्यक्तिस्तत्र कारणं न तु तज्जातीयमिति नैतावता कार्यजातीये कर्तृजातीयं कारणं, अव्यवहितप्राक्कालीनव्यक्तेरेव कारणत्वापत्तौ यागादीनामकारणत्वान्नालौकिकसाधनसिद्धिः। अतो न क्षित्यादिकर्तृत्वेनादृष्टाधिष्ठातृत्वेन वेश्वरसिद्धिः। न चैवं नियतजातीयकार्यानुत्पत्तिः, एकजातीयकार्यानुकूलशक्तिमत्त्वेन तदुपपत्तेः। अत्राह, न विजातीति। विलक्षणजातीयेष्वेका या शक्तिस्तद्वान् प्रवाह इति संबन्धः। विजातिविरुद्धजातिरेकशक्तिमांश्चेति वा। वक्ष्यमाणयुक्तेरित्यर्थः। तर्हि तृणादौ व्यभिचारेणाग्निकारणत्वं कथं ग्राह्यमिति, तत्राह तत्त्व इति। सामान्यविशेषाक्रान्तगोचरयोरन्वयव्यतिरेकयोस्तत्त्वे नियतत्वे ग्राह्ये यत्नवता पुरुषेण भाव्यमित्यर्थः। प्रागभावो हीति, (१)यद्यदृष्टप्राक्कोटितयैव भावरूपमपि कार्यं पूर्वावधिशून्यं स्यादिति शेषः। अत्रेष्टापत्तिमाह अनुपलभ्यमानेति। यत्र प्राक्कोटिः सामग्री नोप-

(१) ननु घटादेः प्रागभाववत्तदुत्तरैकावधित्वं परानभ्युपगतमेवेति कथमापादनमित्यत आह ग्रघटस्येति। तथाच तद्भावेष्वित्यादिना तदभ्युपगतमिति भावः।

नेदमनिष्टमिति चेन्न, तावन्मात्रावधिस्वभावत्वे तदह्वंत् पूर्वेद्युरपि तमवधीकृत्य तदुत्तरस्य सत्त्वप्रसङ्गात्, अपेक्षणीयान्तराभावात्। एवं पूर्वपूर्वमपि। भावे, तदैव सदातनत्वम्। तदहरेवानेन भवितव्यमित्यस्य

---

लभ्यते, तच्चानादित्वमिष्टमेवेत्यर्थः। तावन्मात्रेति [१]अदृष्टपूर्वकोटित्वेनानादिभावमात्रावधिस्वभावत्वे यथा तत्र दिवसे तस्य सत्त्वं तथा गतदिवसेऽपि तदित्यनादिभावोत्तरस्य तत्कार्यस्य सत्त्वप्रसङ्गः, एवं तत्पूर्वपूर्वदिनवृत्त्यपि तत्कार्यं स्यादित्यर्थः। तथाचागन्तुकादेव तस्मात् कार्यस्य कादाचित्कत्वं निर्वहतीति भावः। तदहर्वदिति समासान्तविधेरनित्यत्वात् समाधेयम्। तदवधिस्वभावत्वे यत्र दिनेऽयमध्यक्षस्तत्रैवानेनोत्पत्तव्यमित्येषोऽपि तस्य स्वभावइति भज्यते,

---

(१) अदृष्टपूर्व्वकोटित्वेनेति नन्वत्रेष्टापत्तिः अदृष्टपूर्व्वकोटिकेऽनादित्वाभ्युपगन्तारं प्रत्येवापादनात्, न च पूर्व्वदिने सत्त्वापादनेन प्रत्यक्षत्वापादनमभिमतमिति वाच्यं तथापि तस्योत्तरैकावधित्वाभ्युपगमेन पूर्व्वावधिशून्यतयाऽनादिभावमात्रावधिस्वभावत्वइत्यसङ्गतापातादिति चेत्। मैवम्, दृष्टप्राक्कोटिकघटाभिप्रायेणैव प्रकृतापादनात्। नचादृष्टपूर्व्वकोटित्वेनेत्यसिद्धं, अदृष्टपूर्व्वकोटित्वेनानादिर्योभावः सामग्रीरूपस्तावन्मात्रावधिस्वभावत्वइत्यर्थात्। तथाच, नादृष्टप्राक्कोटितयैवानादित्वम्। अन्यथा, कस्याश्चिद्घटसामग्र्या अपि तथात्वेनानादितया तदुत्तरस्य घटस्यानादित्वं स्यादिति भावः।

स्वभावइति चेन्न, तस्याप्यह्नः पूर्वन्यायेन पूर्वमपि सत्त्व प्रसङ्गात्। तस्मात्, तस्यापि तत्पूर्वकत्वमेवं तत्पूर्वस्यापीत्यनादित्वमेव ज्यायः, न त्वपूर्वानुत्पादे कस्यचिदपूर्वस्य सम्भवइति। तथापि व्यक्त्यपेक्षया नियमोऽस्तु न जात्यपेक्षया इति चेन्न, नियतजातीयस्वभावताव्या-

---

तदह्नरेवेति। अत्राह्नःपदेन कालमात्रमभिप्रेतम्। तदनादित्वे तावन्मात्रावधेर्घटादेरप्यनादित्वप्रसङ्गादित्यनाद्यनित्यप्रवाहसिद्धये तथाविधएव कालोपाधिर्वाच्यः, तथाच तस्याप्यनादिरूपादृष्टावधि(१) स्वभावत्वे तदुत्तरस्यापि दिनस्यानादित्वप्रसङ्गोघटस्येवेति परिहरति तस्यापीति। वस्तुतस्तु, उत्पत्तिगर्भकादाचित्कत्वानुरोधादवधिस्वीकारः, न चोत्तरेणोत्पत्तिर्नियम्यतइत्यवधेः प्राच्यत्वनियतत्वसिद्धौ कारणत्वं सिद्धम्। तथाचोत्पत्तिर्यदि किञ्चिदुत्तरत्वनियता न स्यादनादिः स्यादिति निगर्वः। न त्वपूर्वेति, आगन्तुककारणघटितसामग्र्यजन्यं कार्यं नियतकालोत्पत्तिकं न स्यादित्यर्थः। तथापीति जात्यपेक्षया कारणत्वे निरस्ते व्यक्त्यपेक्षया व्यभिचारेण तत्सुनिरसमिति पूर्वोक्तएवाभिसन्धिः। नियतेति कार्यनियतजातीयत्वे कारणजातिनियमस्य हेतुत्वादित्यर्थः।

---

(१) अदृष्टावधीति अदृष्टप्राक्कोटिकावधीत्यर्थः। घटसामग्रीवद्दिनसामग्र्यामप्यदृष्टप्राक्कोटिकत्वेनानादित्वसम्भवात् तदुत्तरदिनस्यानादित्वप्रसङ्गइति भावः।

घातात्। यदि हि यतः कुतश्चिद्भवन्नेव तज्जातीय-स्वभावः स्यात्, सर्वस्य सर्वजातीयत्वमेकजातीयत्वं वा स्यात्। एवं तज्जातीयेन [illegible]तः कुतश्चिद्भवितव्यमित्यस्य

---

अथ स्वभावादेव कार्यं नियतजातीयं स्यात्, तत्राह यदि हीति। (१)किमयं कार्यस्यैव महिमा; यद्भिन्नजातीयेभ्योऽपि जायमानं सजातीयमेव भवति, हेतोरेव वा; यद्भिन्नजातीयमपि सजातीयमेव जनयति? आद्ये कार्यपचकं तर्कद्वयमाह यदि हीति। (२)अयं घटोयदि पटजनकयावज्जन्यः स्यात् पटजातीयः स्यात्, एवं यदि यावद्धूमजनकजन्यः स्याद्धूमजातीयः स्यात्। एवमन्यजातीयत्वमप्या-पाद्यं, पटादावपि तत्तज्जातीयत्वमापाद्यमिति सर्वजातीयत्वापा-दनार्थः। (३)घटभिन्नं कार्यं यदि यावद्घटजनकजन्यं स्याद्घटजातीयं स्यादित्येकजातीयत्वापादनार्थः।

द्वितीये कारणपचकं तर्कद्वयमाह एवमिति। घटसामग्री यदि

---

(१) एवमित्यग्रेतनेन पौनरुक्त्यमाशङ्क्याह किमयमिति।

(२) सर्व्वजातीयत्वाप्रसिद्धेरन्यथा तर्कमाह अयमिति। यद्यपि व्यक्त्य-पेक्षया नियमेऽपि पटजनकतद्व्यक्तिजन्यत्वस्य घटेऽनभ्युपगमादिदम-युक्तं, तथापि पूर्व्ववर्त्तिव्यक्तित्वेनैव तथात्वे घटपूर्व्ववर्त्तिपटजनकवे-मादिव्यक्तेरपि घटजनकत्वाभ्युपगमादिदमिति ध्येयम्।

(३) वैयधिकरण्यादाह घटभिन्नमिति।

स्वभावः, तदाऽपि सर्वस्मात् सर्वजातीयमेकजातीयं वा स्यात्। कथन्तर्हि तृणारणिमणिभ्यो भवन्नाशुशुक्षणिरेकजातीयः? एकशक्तिमत्त्वादिति चेन्न, यदि हि विजातीयेष्वप्येकजातीयकार्य्यकारणशक्तिः समवेयात्, न कार्य्यात् कारणविशेषः क्वाप्यनुमीयेत, कारणव्यावृत्त्या च न तज्जातीयस्यैव कार्य्यस्य व्यावृत्तिरवसीयेत, तदभावेऽपि तज्जातीयशक्तिमतोऽन्यस्मादपि तदुत्पत्तिसम्भवात्। यावद्दर्शनं व्यवस्था भविष्यतीति चेन्न,

---

पटप्रयोजकयावद्रूपवती स्यात् पटजातीयजननी स्यात्। एवं धूमादिजातीयजनकत्वमप्यापाद्यम्। घटान्यकार्यसामग्री यदि घटप्रयोजकयावद्धर्मवती स्यात् घटजातीयजनिका स्यादिति क्रमेणापादनीयम्। ननु, यद्येकजातीयकारणनियमात् कार्यजातिनियमस्तर्हि भिन्नजातीयेभ्यः कारणेभ्योनाभिन्नजातीयं कार्यं जायेतेत्याह कथमिति। अत्र मीमांसकमुत्तरयति एकेति। कार्यानुपलब्धिलिङ्गकानुमान(१)-द्वयभङ्गप्रसङ्गेन तन्निराकरोति यदि हीति। यावदिति यत्र क्लृप्तकारणभावं विनाऽप्यन्यस्मादेकजातीयं दृश्यते तत्र विजातीयेष्वेककार्यानुकूला शक्तिः कल्प्यते न त्वन्यत्रापि ततोनोक्तदोषद्वयमित्यर्थः।

---

(१) अनुपलब्धिलिङ्गकमभावलिङ्गकम्। अतएव मूलं, कारणव्यावृत्त्या चेति।

निमित्तस्यादर्शनात् दृष्टस्य चानिमित्तत्वात्। एतेन सूक्ष्मजातीयादिति* निरस्तं, अवह्नेरपि तत्सौक्ष्म्याद्-धूमोत्पत्त्यापत्तेः। कार्य्यजातिभेदाभेदयोः समवायि-भेदाभेदावेव तन्त्रं न निमित्तासमवायिनी इति चेन्न, तयोरकारणत्वप्रसङ्गात्। न[1] हि सति भावमात्रं तत्, किन्तु सत्येव भावः। न च जातिनियमे समवायि-

* सूक्ष्मदेकजातीयादिति,—श्री॰ पु॰।

निमित्तस्येति तृणादिषु [(१)]कारणतावच्छेदकरूपस्यादर्शनात्, न च शक्तिरेव तथा अन्योन्याश्रयात्; कारणत्वग्रहे तत्कल्पनमन्यथा रासभेऽपि तदापत्तेः, तत्कल्पनेन च कारणत्वग्रहः तस्यान्वयव्यतिरे-कावच्छेद्यत्वात्, दृष्टस्य च तृणत्वादेरनिमित्तत्वात्कारणतानवच्छेदक-त्वादित्यर्थः। तृणादिषु व्यभिचारमग्निकुर्वद्रूपत्वादतीन्द्रियजाति-विशेषाद्ये परिहरन्ति, तेऽप्यतएव निरस्ताइत्याह एतेनेति। ननु, तृणादयोऽग्नौ निमित्तकारणानि, न च तत्साजात्यवैजात्याभ्यां कार्य-साजात्यवैजात्ये, किन्तु समवायिनस्तथात्वात्, तच्चाग्नावस्त्येवेति शङ्कते कार्येति। तथापि तृणादेर्व्यभिचारेण कारणत्वं न स्यादिति परिहरति तयोरिति। न[1] हीति व्यभिचारिणोऽपि कारणत्वापातादिति भावः। किन्त्विति, तृणादौ चैकैकाभावेऽप्यग्नेर्भावात् कारणत्वं न स्यादित्यर्थः। न च समवायिकारणसाजात्यादिकमपि कार्यस्य तथात्वे तन्त्रं, तद-भावेऽपि कार्यवैजात्यदर्शनादित्याह न चेति।

(१) कारणतावच्छेदकस्येति कारणभेदस्यैव तद्भेदप्रयोजकत्वादिति भावः।

कारणमात्रं निबन्धनमपि तु सामग्री। अन्यथा द्रव्य-गुणकर्म्मणामेकोपादानकत्वे विजातीयत्वं न स्यात्*। न च कार्य्यद्रव्यस्यैषा रीतिरिति युक्तम्, आरब्धदुग्धै-

अपि त्विति सामग्री च क्षणादिघटिता भिन्नैवेति भावः। अन्यथेति न च समवायिनोद्रव्यस्याभेदेऽपि कारणतावच्छेदकधर्म-भेदात् द्रव्यादीनां जातिभेदः स्यात्, तथा हि द्रव्यजनने स्पर्श-वत्त्वमवच्छेदकं गुणकर्मजनने तु द्रव्यत्वमूर्त्तत्वे तथेति वाच्यं द्रव्यत्वे-नैकेनैव रूपेण संयोगविभागौ प्रति कारणत्वेऽपि तयोर्जातिभेदात्, कारणतावच्छेदकस्याकारणत्वाच्चेति भावः। न च कार्यमात्ररीति-रेषा अपि तु द्रव्यस्य सतः, अतोन द्रव्यादिभिः समानोपादानै-र्व्यभिचारः इत्याह न चेति। एवं सति समवाय्यभेदे कार्यद्रव्यं दधिदुग्धरूपं न भिद्येत, क्षीरपरमाणवएवाम्लसंयोगान्नष्टकार्य-द्रव्या दध्यारभन्ते, अतएव क्षीरं नष्टं दधि जातमिति लौकिको-ऽयमनुभवइत्याह आरब्धेति।

नन्वतीन्द्रियेषु परमाणुषु दर्शनाभावात् दध्यारम्भकोयोग्योऽवय-वोवाच्यः, तत्र च क्षीरत्वं योग्यानुपलब्धिवाधितं, (१)प्रत्युतावयवा-

* विजतीयत्वानुपपत्तेः,—इति का० क्री० पु०।

(१) प्रत्युतेति तथाच तत्तत्परमाणुभिरेव तत्तदारम्भइति नैकोपादानकत्वं तयोरिति भावः। अत्र च जातिपदं द्वित्वादौ व्यभिचारवारणाय। न च कार्य्यकारणोभयवृत्तित्वादित्येवास्तु कृतमवयवादिपर्य्यन्तेनेति वाच्यं रूपत्वादौ व्यभिचारात्। न चैवमपि समवायिकार्य्यवृत्तित्वा-दित्येवास्तु, तत्रैव तात्पर्य्यादित्याहुः।

रेवावयवैर्दध्यारम्भदर्शनात् ।

---

वयविवृत्तिजातित्वेन पृथिवीत्ववत् दधित्वस्य परमाणुवृत्तित्वमनुमेयम् । न च तन्तुत्वेन व्यभिचारः तस्य पटावयवे अंश्ववयविनि वृत्तेरिति वाच्यं तदवयविवृत्तित्वे सति तदवयववृत्तित्वस्य विवक्षितत्वात्, द्व्यणुकवृत्तिजातित्वस्य लिङ्गत्वाद्वा । न च दधित्वं न परमाणुवृत्ति पृथिवीत्वव्याप्यजातित्वात् पटत्ववदिति वाच्यं *व्यञ्जकाभावस्योपाधित्वात्, पटत्वव्यञ्जकसंस्थानविशेषस्य परमाणावभावाद्दधित्वव्यञ्जकरसविशेषस्य च तत्र सत्त्वात् । न च रसविशेषवदवयवित्वं तद्व्यञ्जकं गौरवात्, गन्धवदवयवित्वस्य पृथिवीत्वव्यञ्जकत्वे तस्यापि परमाणाववृत्त्यापत्तेश्च । यद्वा, दधिद्व्यणुकं दधित्वाश्रयोपादानकं कार्यत्वे सति दधित्वात्, स्थूलदधिवत् । न च कार्यत्वं व्यर्थं, स्वतोऽनैकान्तिकपरिहारार्थत्वात् । दधिद्व्यणुकोपादानं† वा न क्षीरारम्भकं दध्यवयवत्वात् दध्यारम्भकदध्यवयववत् ।

अत्रोच्यते । [१]क्षीरपरमाणूनां तत्रावश्यकत्वाद्यएवावयवाः क्षीरमारब्धवन्तस्तएव सहकारिविशेषाद्दध्यारभन्ते लाघवात् ।

---

* परमाणुवृत्तिव्यञ्जकाभावस्येति सो० ।

† दध्युपादानं,—इति सो० ।

---

(१) दधि समवायिकारणकं भावकार्यत्वादित्यनुमानं लाघवाख्यतर्कसहकृतं दुग्धारम्भकपरमाणुमेव विषयीकरोति, अन्यथा गौरवात्, दुग्धं विनाऽपि कदाचिद्दध्यापत्तेश्चेत्याशयवानाह क्षीरपरमाणूनामिति ।

(१)अनुमाने चानुकूलतर्काभावः, (२)दधित्वं यदि पार्थिवपरमाणु-वृत्तिजातिः स्यात् पटवृत्ति स्यादिति प्रतिकूलतर्कप्रतिहतत्वं च। (३)न च लाघवोपकार्य*मानाभावः, दध्यारम्भकः परमाणुर्न दधि-

---

* लाघवानुग्राह्य,—इति सो०।

---

(१) अनुमाने पूर्व्वपक्षानुमाने।

(२) दधित्वमिति जलत्वे व्यभिचारादाह पार्थिवेति। स्वमते दुग्धत्वे व्यभिचारादाह परमेति। परमाणुपरिमाणादौ व्यभिचारादाह जातिपदम्। न च तादृशद्रव्यत्वसाक्षाद्व्याप्यजातित्वं पटवृत्तित्व-प्रयोजकमिति वाच्यं साक्षात्त्वस्य गुरुत्वात्, सत्तायाः पटावृत्तित्वप्र-सङ्गाच्च। नन्वेवमप्रयोजकतयाऽस्यैव तर्कस्य शिथिलमूलत्वमिति चेत्। अत्राहुः। न हि परम्परया पटारम्भके परमाणौ दध्यारम्भकपर-माणुवृत्तिर्दधित्ववत्तयाऽपि जातिरङ्गीक्रियते, तस्या अपि पटे प्रत्य-यापत्तेः, अवयवावयविवृत्तिजातेरवयविवृत्तित्वनियमात्। तथाचा-न्यस्यावच्छेदकस्याभावात् पृथिवीपरमाणुत्वादिकमेव तत्तद्द्व्यणुकजन-कतावच्छेदकम्। एवञ्च दधिद्व्यणुकाद्याश्रयपरमाणवोऽपि तत्र स्वरूपयोग्या इति नित्यस्य सहकार्य्यवश्यम्भावे तैरपि पटजनने पूर्व्वोक्तयुक्त्या तज्जातेः पटवृत्तिताऽऽपत्तिरित्यत्र तात्पर्य्यमिति।

(३) न चेति यद्यपि प्रमाणविषयीभूतविषयस्य लाघवस्य सहकारि-तया वक्ष्यमाणस्य न लाघवोपकार्य्यत्वम्, तथाप्युक्तस्य भावकार्य्यस्य तथात्वम्। तथाच तेनैव तदवयवतायां सिद्धायामेतस्य कथञ्चि-त्तदुपकार्य्यत्वम्। एवञ्च लाघवोपकार्य्योपकार्य्यमानाभावो न चेति फक्किकार्थ इत्याहुः।

त्वाश्रयः [1]नित्यपार्थिवत्वात् पटारम्भक*परमाणुवदित्यनुमानस्य सत्त्वात्। न च व्यञ्जकासत्त्वमुपाधिः [2]दधित्वाश्रयपरमाणौ च रसविशेषवत्त्वं दधित्वव्यञ्जकमस्तीति वाच्यं [3]प्रतिकूलतर्केण रसविशेषवदवयवित्वस्य [4]तद्व्यञ्जकत्वात्। किञ्चैवं दुग्धोत्कर्षापकर्षयोर्दध्यु-

---

* पटारम्भक,—इति सो०।

---

(१) नित्येति एतच्च दध्यवयविनि व्यभिचारवारणाय। काले व्यभिचारवारणाय पार्थिवत्वादिति। न च समवायगर्भत्वमन्यथा परम्परासंबन्धमादाय व्यभिचारापत्तेरिति वाच्यं एवमपि साक्षात्संबन्धगर्भस्य निर्दोषत्वात्।

(२) दधित्वाश्रयेति दधित्वाश्रयाभिमतपरमाणावित्यर्थः। अवयवित्वप्रवेशे गौरवादिति भावः।

(३) प्रतिकूलेति पूर्व्वोक्तप्रतिकूलतर्केणेत्यर्थः। तथाच गौरवमपि प्रामाणिकमिति भावः। अतएव तथासति गन्धवदवयवित्वस्य पृथिवीत्वव्यञ्जकत्वे तदपि परमाणौ न वर्त्ततेति प्रतिवन्दिः परास्ता। तत्र गौरवस्य प्रामाणिकत्वाभावात्। किञ्चैवं गन्धसमवायिकारणतावच्छेदकपृथिवीत्वस्याभावे निर्गन्धत्वापत्तौ तदारब्धकार्य्यस्य निर्गन्धत्वप्रसङ्गात्। नचैवं दधित्वव्यञ्जकरसविशेषसमवायिकारणतावच्छेदकतया दधित्वं परमाणावपि, अन्यथा परमाणौ तद्रसाभावेन तदारब्धदध्न्यपि तदभावापत्तेरिति वाच्यं पृथिवीत्वस्यैव तदवच्छेदकत्वात्, घटादौ सहकारिविरहे तदनुत्पादात्। तदारम्भकपरमाणौ च तदुत्पत्तिरिष्टैव। अतएव तेन कदाचित् दध्यारम्भोऽपि। अतएव मधुराम्लरससमवायिकारणतावच्छेदकतया पृथिवीत्वसिद्धिरुक्ता वर्द्धमानचरणैरिति दिक्।

(४) तद्व्यञ्जकत्वादिति तथाच साधनव्यापकत्वमुपाधेरिति भावः।

त्कर्षापकर्षप्रयोजकत्वानुपपत्तिः, अनुपादानोत्कर्षादेरनुपादेयोत्कर्षाद्यप्रयोजकत्वात्। नचेन्धनोत्कर्षादिना वह्नेस्तथात्वेन व्यभिचारः, [1]यस्योद्भूतरूपस्योत्कर्षार्थं तद्वृत्तिद्रव्यत्वव्याप्यजातीयं यदुपादीयते,

---

(१) यस्येति वह्न्युत्कर्षार्थमुपादीयमानेन्धने व्यभिचारादाह तद्वृत्तीति। सत्तामादाय दोषतादवस्थ्यादाह द्रव्यत्वव्याप्येति। व्याप्तिश्च भेदगर्भेति न द्रव्यत्वमादाय दोषतादवस्थ्यमिति भावः। तथापि तैलोत्थितोद्भूतरूपदहनार्थकेऽनुद्भूतरूपतैलस्यदहने व्यभिचारः, अनुद्भूतान्नोद्भूतमिति मतेनैवास्य ज्ञातत्वादित्यत आह उपदीयतइति। उपादानं प्रवृत्तिः। तस्य चाप्रत्यक्षत्वान्न तद्योग्यतेति न दोषः। अतएव घटाद्युत्कर्षार्थके मृदारम्भके परमाण्वादौ न व्यभिचारः। न चैतन्मते अनुद्भूतरूपस्योद्भूतरूपार्थकत्वाभावादेव न व्यभिचारइति किं तद्वारणार्थं विशेषणोपादानेनेति वाच्यं नियमतोयदनन्तरं यद्भवति तस्यैव तदर्थकत्वेन विवक्षितत्वात्, तस्य च तत्सहचरितावयवान्तरमादाय तत्रापि सत्त्वात्। अन्यथा दुग्धस्यापि दधिप्रतिबन्धकतया तथात्वं न स्यात्।

ननु धूमार्थोपादीयमानार्द्रेन्धनोत्कर्षे व्यभिचारः,न चार्द्रत्वं जलसंबन्धो न तद्विशेषतद्वृत्तिद्रव्यत्वव्याप्यजातिरस्तीति वाच्यं एवमपि शरीरोत्कर्षार्थोपादीयमानभक्ष्योत्कर्षे व्यभिचारावारणादित्याशङ्क्य उपादेयतावच्छेदकधर्मावच्छेदेन तद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं विवक्षितम्। न च शरीरोत्कर्षार्थोपादीयमाने उपादेयतावच्छेदकावच्छिन्नं पार्थिवमात्रं, जलस्यापि तथाभावेनौदर्यानलदाह्यमात्रस्य रसवन्मात्रस्य तथाभावादिति समादधुः। तच्चिन्त्यं, तत्र पक्षसमत्वेन व्यभिचाराभावाद्विवक्षायावैयर्थ्यात्, आहारपरिणतिभेदेन शरीरभेदाभ्युपगमाच्च। किञ्चैवमपि घटोत्कर्षार्थोपादीयमानदण्डोत्कर्षेण व्यभिचारः।

तत् तदुपादानोपादेयमिति व्याप्तेः। इन्धने तु तद्वृत्तिद्रव्यत्वव्याप्यजातेरभावः। उद्भूतरूपस्येति विशेषणान्नानुद्भूतरूपवह्न्युत्कर्षार्थमुपात्तवह्न्युत्कर्षेण व्यभिचारः। उपादेयता च साक्षात्परम्परासाधारणी विवक्षितेति न पटोत्कर्षार्थोपात्ततन्तूत्कर्षेण व्यभिचारः। न च यद्दधि न तद्दुग्धारभ्यमिति स्थूले दर्शनाद्दधिद्व्यणुकं न (१)दुग्धत्वा-

---

यदि च योग्यताविवक्षायां दण्डारम्भकपरमाणुना कदाचिद्घटारम्भात् साध्यसत्त्वेन न व्यभिचारः, तदा भक्ष्यारम्भकपरमाणुनाऽपि शरीरारम्भाविरोधः। अपि चालोकोत्कर्षार्थोपादीयमानोत्कृष्टप्रदीपादौ व्यभिचारः। तस्मादुद्भूतस्पर्शस्येत्यपि विशेषणं देयम्। यद्यपि योग्यताविवक्षायां दण्डघटवत् कदाचित् दध्नोऽपि दुग्धोपादानोपादेयत्वे विवक्षितसाध्यस्य फलोपधानगर्भस्य न सिद्धिः, तदविवक्षायां घटोत्कर्षार्थकदण्डोत्कर्षेण व्यभिचार एव; तथापि परिमाणोत्कर्षनिबन्धन एवोत्कर्षो विवक्षितः, घटे च स न दण्डोत्कर्षनिबन्धनः किन्त्ववयवोत्कर्षनिबन्धन एवेत्येके। एतदनुशयादेव यद्द्रव्येत्यादिकमित्यन्ये। यदर्थं यदुपादीयते तत्तदुपादानोपादेयमित्यत्र वैजात्यं गुणविरोधश्च बाधकमिति प्रकृते तदुभयाभावोपवर्णनं, उपलक्षणतया च बाधकाभावे सतीत्यत्र तात्पर्य्यमिति न व्यभिचारशङ्केत्यप्याहुः।

(१) न दुग्धत्वेति दुग्धत्वाश्रयस्य कालस्य जनकत्वाद्बाध इत्यत उक्तं परमाणुष्विति। एतेन परमाणुग्रहणं स्वरूपकथनाय न चाग्रेतनसिद्धसाधनासम्भवः द्व्यणुकारम्भकस्य परमाणुत्वनियमेन तत्सम्भवादित्यपास्तम्।

अयपरमाण्वारभ्यमिति वाच्यं [1]द्वधिद्व्यणुकारम्भके परमाणौ दुग्धत्वस्याऽवृत्तेः। सत्ताऽन्यद्रव्यत्वसाक्षाद्व्याप्यजातेरेव परमाणौ वृत्तेः, [2]द्रव्यत्वस्यापि द्रव्यत्वसाक्षाद्व्याप्यजातित्वात्, [3]तद्भिन्नतद्व्याप्याव्याप्यत्वे सति तद्व्याप्यत्वस्यैव साक्षाद्व्याप्यत्वरूपत्वात्। नचान्ये परमाणवस्तत्रादृष्टाकृष्टाद्ध्यारम्भकाः, तदुत्कर्षाद्यनुविधानानुपपत्तेरुक्तत्वात्, दध्यर्थं

---

(१) दधिद्व्यणुकेति तथाच प्रतियोग्यप्रसिद्ध्या साध्याप्रसिद्धिरिति भावः। सिद्धसाधनमिति भावइत्यन्ये।

(२) तर्हि द्रव्यत्वमपि तत्र न वर्त्ततेत्यतआह द्रव्यत्वस्यापीति।

(३) तद्भिन्नेति तद्व्याप्यत्वमात्रं परम्पराव्याप्येऽतिव्याप्तमित्यतउक्तं सत्यन्तम्। तथापि तद्व्याप्याव्याप्यत्वमसम्भवि पृथिवीत्वादेर्द्रव्यत्वादिव्याप्यीभूतद्रव्यत्वादिव्याप्यत्वात्, द्रव्यत्वादिव्याप्यीभूतपृथिवीत्वादिव्याप्यत्वाच्च, अभेदेऽपि व्याप्तिसत्त्वादित्यतउक्तं तद्भिन्नेति। साक्षाद्व्याप्यव्यापकाभिमतोभयभिन्नेत्यर्थः। सत्तादेरपि द्रव्यत्वादिसाक्षाद्व्याप्यत्वापत्तिरिति चरमं तद्व्याप्यत्वमुक्तम्। न च तदुभयभिन्नद्रव्यत्वादिव्याप्यगुणवत्त्वादिव्याप्यतया पृथिवीत्वादावसम्भवइति वाच्यं तद्भिन्नतद्व्याप्यजात्यव्याप्यत्वे सतीत्यर्थात्। नन्वेवं चरमजातेः स्वसाक्षाद्व्याप्यत्वं न स्यात् स्वभिन्नस्वव्याप्यजात्यप्रसिद्धेः, न च स्वस्य स्वसाक्षाद्व्याप्यत्वं न विवक्षितमिति वाच्यं द्रव्यत्वस्यापि स्वसाक्षाद्व्याप्यत्वमित्युपक्रमविरोधादिति चेत्। मैवम्, द्रव्यत्वसाक्षाद्व्याप्यत्वमात्रस्यैव प्रकृतत्वेन लक्ष्यत्वादित्याशयः। वस्तुतस्तु, तद्भिन्नतदव्यापकजात्यव्याप्यत्वे सति तद्व्याप्यत्वं विवक्षितं, तच्च चरमजातावपीति नोक्तदोषः। अत्र चाद्यं तत्पदं साक्षाद्व्याप्यत्वाभिमतमात्रपरं, अन्यच्च व्यापकत्वाभिमतपरमित्यवधेयम्।

दुग्धोपादानानुपपत्तेश्च। अपि च, [१]यद्द्रव्यध्वंसजन्यं यद्द्रव्यं भवति तत्तदुपादानोपादेयं यथा महापटध्वंसजन्यः खण्डपटइति नियमात्

---

(१) यद्द्रव्येति घटध्वंसजन्ये घटरूपादिध्वंसे व्यभिचारादाह चरमद्रव्यपदम्। यद्द्रव्याभावजन्यमिति कृते प्रतिबन्धकद्रव्यात्यन्ताभावजन्ये द्रव्ये व्यभिचारः स्यादिति ध्वंसपर्य्यन्तमुपात्तम्। न च तद्ध्वंसस्यापि जनकत्वाद्दोषतावदवस्थम्, ध्वंसत्वेन जनकत्वस्याग्रे विवक्षणात्। नचैवं दृष्टान्तासिद्धिः महापटस्य प्रतिबन्धकतया तदभावस्य संसर्गाभावत्वेनैव हेतुत्वादिति वाच्यं महापटं विनाऽपि खण्डपटोत्पादापत्तेः, अत्यन्ताभावस्य नित्यस्य स्वरूपयोग्यस्य सहकार्य्यवश्यम्भावापत्तेश्च। नचैवं तत्प्रागभावस्याहेतुत्वे महापटोत्पत्तेः प्राक् खण्डपटो न स्यादिति तन्तुमात्रमुपलभ्येतेति वाच्यमिष्टापत्तेः, तथा विधसंस्थानयोगितया पटव्यपदेशः। यद्वा, द्वितन्तुकादिमहापटध्वंसजन्यएव त्रितन्तुकादिः पटोजायते, मूर्त्तानां समानदेशताविरोधेन वेमाद्यभिघातात् द्वितन्तुकादिनाशे त्रितन्तुकाद्युत्पादाभ्युपगमात्। तत्र च सर्व्वतन्तुकमहापटप्रागभावः सन्नप्यन्यथासिद्धएव, एवञ्च त्रितन्तुकादौ पटध्वंसजन्यपटत्वेन खण्डपटत्वं, पटजनकध्वंसप्रतियोगिपटत्वेन महापटत्वञ्च न विरुद्धम्। द्वितन्तुके च यदि खण्डपटव्यपदेशः, तदाऽग्रिमापेक्षया परिमाणापकर्षनिबन्धनो गौणः। वस्तुतः, प्रथमपटन्यूनसमवायिकारणकएव खण्डपटइति त्रितन्तुकादीनामपि महापटत्वमेवेति तत्रापि गौणएव तद्व्यपदेशइति। द्रव्यप्रकाशे च संसर्गाभावत्वेन तस्य कारणत्वाभिधान मतान्तरेणेति मन्तव्यम्। आद्यद्रव्यपदं किमर्थमित्यवशिष्यते। तत्र ब्रूमः, तत्त्वसाक्षात्कारजन्यमिथ्याज्ञानध्वंसस्य ध्वंसत्वेन कायव्यूहं प्रति जनकतया व्यभिचारवारणाय तदिति। यत्तु प्रयागमरणस्य

दुग्धध्वंसजन्यं दधि दुग्धोपादानोपादेयम्। न च प्रतिबन्धकद्रव्य-ध्वंसजन्यद्रव्येण व्यभिचारः, ध्वंसत्वेन कारणत्वस्य विवक्षितत्वात्, प्रतिबन्धकाभावस्य च संसर्गाभावत्वेन हेतुत्वात्। न च स्थूलदुग्धध्वंसजन्यं दधि न तदवयवजन्यमिति व्यभिचारः परमाणुश्च न तदवयवइति वाच्यं साक्षात्परम्परासाधारणोपादेयत्वस्य विवक्षितत्वात्। रत्नकोषकृतस्तु,

---

संयोगध्वंसात्मकस्य स्वर्गहेतुत्वश्रुतेः स्वर्गिशरीरजनकतया तत्र व्यभिचारवारणाय तदिति। तन्न, अदृष्टाद्वारकत्वस्य साक्षाज्जनकत्वस्य वाऽवश्यं वाच्यतया ततएव तदुद्धारात्। अन्यथा ब्राह्मणशरीर-शालग्रामध्वंसादेरधर्म्मद्वारा नारकिशरीरजनकतया व्यभिचारता-दवस्थ्यापत्तेः। अन्ये तु प्रागभावध्वंसात्मककपालजन्यघटे व्यभिचारवारणाय तदुपादानम्। न च ध्वंसत्वेन जनकत्वविवक्षयैव तद्वारणमिति वाच्यं ध्वंसत्वेनेत्यस्य ध्वंसत्वनियतताया जनकताया विवक्षितत्वादित्यर्थात्, तावतैव प्रतिबन्धकाभावजन्ये व्यभिचारस्य निरासात्। यद्यपि प्रागभावोपादानाप्रसिद्ध्या व्यभिचारोऽपि तत्राप्रसिद्धइति कथं तद्वारणाय तत्, तथापि नियतसामानाधिकरण्य-रूपव्याप्तिग्रहौपयिकतया सार्थकत्वम्। यद्वा, यद्द्रव्यध्वंसजन्यं यद्द्रव्यं तदुभयमेकोपादानकमित्यत्र तात्पर्य्यं, एकोपादानकत्वञ्चान्यत्र प्रसिद्धमिति तत्र व्यभिचारप्रसिद्धिरिति वदन्ति। यत्तु अवयव संयोगध्वंसजन्यखण्डपटे व्यभिचारवारणाय द्रव्यपदं, न च तत्र साध्यमस्त्येवेति वाच्यं तत्संयोगाश्रयतन्तूनामपि नाशे तद्भिन्नमात्रसमवेत-खण्डपटे तथापि व्यभिचारादिति। तत्तुच्छं, तस्य महापटध्वंसोपक्षीणत्वेन खण्डपटं प्रत्यहेतुत्वात्। अन्यथा तन्तुनाशजन्यखण्ड-पटमादाय दोषतादवस्थ्यापत्तेः। एतेन जन्यत्वेन प्रयोज्यत्वमात्रं विवक्षितमित्यपास्तम्।

एतेनापोहवादे नियमोनिरस्तः। कार्य्यकारणभावादे-

---

रसविशेषवृत्तिरेव दुग्धत्वादिजातिः, द्रव्यवृत्तित्वेऽपि तद्व्यञ्जकस्य रस-स्यावश्यकत्वात्; द्रव्यत्वादिसामानाधिकरण्यबुद्धिश्च परम्परासंबन्धात्। (१)तथाच दुग्धारम्भकाएवावयवाः* पाकजरसविशेषशालिनोदध्यार-म्भकाइति न (२)विरोधः इत्याहुः।

तृणादेरग्निं प्रति तृणाद्यन्यान्यत्वेन कारणत्वं गृह्यते,—इति न व्यभिचारइति व्यावृत्तिपदार्थवादिना यत् समाहितं, तत्राप्यनु-मानभङ्गइत्यतिदिशति एतेनेति। नियमोऽविनाभावः। वह्निं विना तदन्यस्मादपि धूमसम्भवेन ततोवह्न्यनुमानाभावापातात्, तृणादिवदतद्व्यावृत्त्या तत्रापि कारणत्वग्रहसम्भवादित्यर्थः। कार्यका-

---

* एव महावयवाः,—इति सो०।

---

(१) तथाचेति दुग्धरूपरसविशेषारम्भकाएवावयवाः पाकजरसविशेष-शालिनो यतोऽतएव दध्यारम्भकाः तस्य रसविशेषात्मकत्वादित्यर्थः। यद्वा, दुग्धादिपदं द्रव्यपरमेव दुग्धत्वादेः परम्परासंबन्धेन द्रव्यवृत्ति-त्वाभ्युपगमादिति।

(२) न विरोधइति नैकोपादानकत्वविरोधः, रसविशेषात्मकयोर्दधिदु-ग्धयोरेकत्र प्रमाणसिद्धत्वादित्यर्थः। अनभिमतिवीजत्वाच्च द्रव्यत्वा-दिसामानाधिकरण्यबुद्धेः साक्षात्संबन्धविषयकत्वे बाधकाभावान्न पर-म्परासंबन्धविषयत्वं अन्यथा पृथिवीत्वादेरप्यभिव्यञ्जकगन्धादिवृत्ति-तापत्तेरिति।

रणभावासिद्धौ स्वभावनियमोऽपि दुरवगमः, कार्य्यानुपलब्धिप्रसङ्गरूप-विपक्षबाधकसाध्यत्वात्तस्येति* भावः। (१) तदेवं† गत्यन्तराभावात् व्यक्ती

* बाधकसत्त्वात्तस्येति,—इति सो०।
† एवञ्च,—इति पाठान्तरम्।

(१) एवञ्चेति नन्वेवं तवापि वह्निप्रयोज्यवैजात्यशङ्कया न धूमसामान्य-मग्निं गमयेत्। यदि चोपस्थितधूमत्वावच्छेदेन व्यभिचाराग्रहात्तेनैव रूपेण कार्य्यत्वग्रहः, तदा यत्रोपस्थितरूपे व्यभिचारस्तत्रैव रूपान्त-रेण कारणत्वकल्पनमतो न रासभमन्तर्भाव्य तत्कल्पनम्। किञ्च, शक्तिवैजात्ययोरन्यतरकल्पनावसरे तयोः कल्पनीयतया लाघवेन क्लृप्तान्यान्यत्वस्यैवावच्छेदकत्वकल्पनादिति। तन्न ब्रूमः। वैजात्य-स्यापि प्रमाणान्तरसिद्धतया तत्राप्यवच्छेदकत्वकल्पनैव। अन्यथा सहकारिनियमानुपपत्तेः। तदिदमुक्तं मूले, तेनैव व्यज्यमानस्येति। न च सामग्रीत्रयकल्पने गौरवं, तस्यावश्यकत्वात्। अन्यथा सह-कारिनियमानुपपत्तिरेव। स हि कार्य्यतावच्छेदकभेदेन फलवि-रोधे सत्येव स्यात्। अन्यथा प्रत्यक्षादिप्रमाणानामपि जन्यज्ञान-त्वावच्छिन्ने तदन्यान्यत्वेन हेतुतापत्तेः। यदि च सहकारिनियमा-नुपपत्त्या सामग्रीभेद-फलवैजात्यावश्यकत्वे गौरवान्न तथा, तदा प्रकृ-तेऽपि तुल्यं, तत्तत्सहकारिसंबन्धानामपि तदन्यान्यत्वेन हेतुत्वान्नि-यमोपपत्तेरित्यपि तुल्यं, यद्विशेषयोः कार्य्यकारणभावग्रह इत्यादिक-मपि तुल्यं, तेन रूपेणान्वयव्यतिरेकग्रहान्न तथेति च तुल्यम्। अपि चैवं भौमत्वस्यापि विशेषतया गुरुत्वेन वह्नित्वसामान्यावच्छिन्ने चौदर्य्यादिवह्निकारणमप्यन्तर्भाव्य तदन्यान्यत्वेन हेतुत्वापत्तिः। कि-ञ्चैवं, जन्यतावच्छेदकमपि तत् स्यादिति घटपटान्यान्यत्वावच्छेदेन

त्यादिविप्लवप्रसङ्गात्। तस्मान्नियतजातीयतास्वभाव-भङ्गेन* व्यक्त्यपेक्षयैव नियमइति फूत्कारेण तृणादेरेव निर्मन्थनेनारणेरेव प्रतिफलिततरणिकिरणैर्मणेरेवेति प्रकारनियमवत्तेनैव व्यज्यमानस्य कार्य्यजातिभेदस्य

---

नामेव कारणत्वमित्युपसंहरति तस्मादिति। वह्न्यवान्तरजातीये तृणा-दीनां प्रत्येकं कारणत्वस्वीकारादेव सर्व्वं समञ्जसमित्याह फूत्का-रेणेति। प्रकारनियमः सहकारिनियमः। वह्न्यनुकूलशक्तिमत्त्वेन कारणत्वे मणिफूत्कारादि क्षोमादपि कार्य्योत्पत्तेरित्यर्थः। न चानुपलब्धिबाधितं वैजात्यमित्याह तेनेति। (१)विवादपदमग्न्योवह्नि-

---

* स्वभावभङ्गे,—इति ख्या० पु०।

---

दण्डवेमान्यान्यत्वेन हेतुत्वापत्तिः। तथाचोक्तगौरवादतिप्रसङ्गाच्च न तदन्यान्यत्वमवच्छेदकमिति दिक्। यत्तु नैकं विरुद्धद्वयप्रयोज्यं भावाभावयोरेककार्य्यजनकतापत्तेः। अतएव न यागध्वंसेनापूर्व्व-स्यान्यथासिद्धिः, तदिह वह्नित्वं यदि तृणाद्यन्यान्यप्रयोज्यं स्यात् न स्यात्तदन्यवह्न्यवयवादिप्रयोज्यं विरोधादिति। तच्चिन्त्यं, एवं हि तृणप्रयोज्यत्वेऽपि तदन्यवह्न्यवयवादिप्रयोज्यत्वं विरुध्येत। यदि च तयोः परस्परविरहरूपत्वाभावात्तदुभयप्रयोज्यत्वं न विरुद्धं, तदा तुल्यम्। वह्न्यवयवत्वेनैव तस्य प्रयोजकत्वं न तु तृणाद्यन्यान्यत्वेने-त्यपि तुल्यमिति।

(१) विवादपदमिति एतच्च प्रदीपादौ साध्यसिद्ध्याऽंशतः सिद्धसाधन-वारणार्थम्।

भावात्। दृश्यते च पावकत्वाविशेषेऽपि प्रदीपः प्रासादोदरव्यापकमालोकमारभते, न तथा ज्वालाजालजटिलोऽपि दारुदहनो न तराञ्च कारीषः।

---

त्वव्याप्यजातिमन्तः, (१)नियतसहकार्य्यनुप्रवेशेन जायमानवह्नित्वात् प्रदीपदारुदहनवदिति कारणविशेषसंवन्धव्यङ्ग्यत्वात्तज्जातीनामित्यर्थः। न च दृष्टान्तः साध्यविकलइत्याह दृश्यते चेति। तत्र तैलादिकारणविशेषव्यङ्ग्यत्वं यथा जातीनां, तथाऽत्रापीति नादृष्टचरकल्पनमित्यर्थः। यद्यपि दुरूहत्वान्नैष विशेषस्त्रापाततः स्फुरति, तथापि विशेषानाकलनेऽपि तदनुकूलकारणमात्रमनुमीयते, तदाकलने तु

---

‡ इति,—इति नास्ति आ० पु०।

---

(१) नियतेति ननु वृश्चिकादौ हेतुसत्त्वेऽपि साध्यासत्त्वाद्व्यभिचारइति चेत्। मैवम्, नियतसहकारिप्रयोज्यजातिकत्वस्य साध्यत्वात्। प्रकृते च पक्षधर्म्मतावलेन वह्नित्वव्याप्यैव सा जातिः सिध्यतीति तथा प्रतिज्ञानात्। न चैवमपि ध्वंसे व्यभिचारः, जातिपदस्य धर्म्ममात्रपरत्वात्। प्रदीपादिदृष्टान्तोपादाननिर्व्वन्धस्तु अतेजस्त्वाद्युपाधेः साध्याव्यापकत्वप्रदर्शनार्थमित्याहुः। वस्तुतस्तु साध्यदृष्टान्तालोचनेन वह्नित्वादिति हेतुरभिमतः स्फुटत्वात् कण्ठरवेण नाभिहितः, नियतेत्यादिकञ्च विपक्षबाधप्रदर्शनपरमिति युक्तमुत्पश्यामः।

यस्तु तं नाकलयेत्, स कार्य्यसामान्येन कारणमात्र-

विशेषोऽप्यनुमीयतएवेत्याह यस्त्विति। नन्वग्न्यवान्तरजातीये तृणादीनां कारणत्वं न युक्तं, कारणगतैकशक्तिरूपमपहाय कार्य्यगतबह्वन्तरजातिकल्पने गौरवात्, तृणादिजन्याग्निष्ववान्तरजातेर्योग्यानुपलब्धबाधितत्वात्। यत्र च तत्तत्कारणप्रयोज्यं प्रदीपादौ वैजात्यमनुभूयते, तत्रैकशक्तिमत्त्वमपि कारणे नास्ति। अतएवानुमानमप्रयोजकम्। [१]अथास्ति तृणादीनां फूत्कारादिसहकारिता, तच्च फूत्कारादीनां सहकारित्वं तृणत्वाद्यवच्छिन्नं प्रति स्यात्, तृणादिसाधारणैकशक्तिमन्तं प्रति वा? नाद्यः, तृणत्वाद्यवच्छिन्नस्य प्राक्कालनैयत्याभावेन कारणत्वाभावात् तत्सहकारित्वस्य दूरनिरस्तत्वात्। नान्त्यः, तृणादिवारणैरपि फूत्कारसमवहितादग्न्युत्पत्त्यापत्तेः। न च फूत्कारादिविशिष्टे तृणादौ शक्तिर्न केवले इति वाच्यं तस्य तृणादिभिन्नत्वे तृणादीनामजनकत्वापत्तेः। [२]तदभिन्नत्वे च यत् तृणं फूत्कारेणोपधीयते, तत्र वा शक्तिः, फूत्कारसमवधाने सति वा? नाद्यः, फूत्काराद्यसमवधानेऽपि तस्मात् तृणादेरग्न्युत्पत्त्यापत्तेः। नापरः, तथा सति सैव शक्तिः तृणे फूत्कारादरणौ

---

(१) ननु प्रागुक्तसहकारिनियमएव विपक्षबाधकइत्याह अथेति।

(२) तदभिन्नत्वे चेति फूत्कारप्राक्कालएव तृणे शक्तिस्तत्समवधाने तज्जन्या वेति विकल्पार्थः।

निर्मन्थनादिति शक्त्यावनियतहेतुकत्वापत्तेः। तत्राप्येकशक्तिमत्त्वेन हेतुत्वेऽनवस्थापत्तेरिति।

मैवम्, यथा ह्यन्वयव्यतिरेकाभ्यां तृणफूत्कारयोरन्योन्यसहकारित्वं (१)तथैव तच्छक्त्योरपि परस्परसहकारित्वेन वह्न्यनुकूलत्वं, तथैव कार्यदर्शनात्, न तु मणिफूत्कारयोः सहकारित्वमिति न तच्छक्त्योरपि परस्परसहकारित्वम्। कार्यविशेषात् कारणविशेषानुमानं तु वह्निवृश्चिकादौ दृश्यतएव, निरूपितनियतवह्न्यादिकारणके धूमादौ अनुमानं स्यादेव। अन्यथा कार्य्यवैजात्येऽपि वह्नित्वेन धूमविशेषएव कारणत्वं न धूममात्रइति शङ्कया तवाप्यनुमानं न स्यादिति।

अत्रास्मत्पितृचरणाः,(२)तृणारणिमणिफूत्कारादिव्यक्तीनामनन्तत्वेन प्रतिव्यक्ति भावहेतुजानित्यानन्तशक्तिस्वीकारे* गौरवं, तावदनन्त-

* हेतुजनितानन्तशक्तिस्वीकारे,—इति ह० पु०।

(१) तथैव तच्छक्त्योरपीति यद्यप्येवं कार्य्यवैजात्यमावश्यकं एकजातीयकार्य्ये सहकारिनियमानुपपत्तेः, तथापि तृणफूत्कारसंवन्ध-तरणिकिरणमणिसंवन्धादिष्वप्येकजातीयशक्तिमत्त्वं कारणतावच्छेदकं, तथा च तदन्यतमसंवन्धाभावे तृणनिर्मन्थनसमवधानेऽपि नाग्न्युत्पत्त्यापत्तिरिति भावः।

(२) तृणेति ननूक्तगौरवेण मा भूच्छक्तिकल्पना, जातिकल्पनाऽपि कुतः, यावता वह्न्यनुविधायित्वमेव धर्म्मिकल्पनातइति न्यायेनावच्छेदकमस्तु, नचेदमेव वह्निजनकत्वं येनात्माश्रयान्नावच्छेद्यावच्छेदकत्वं किन्त्वनन्यथासिद्ध्यादिघटितमिति चेत्। न, तदनुविधायित्वस्य सहकार्य्यन्तरसाधारणतया सत्सत्त्वे तृणाद्यन्यतमासत्त्वेऽपि वह्न्युत्पादापत्तेः, कारणतावच्छेदकावच्छिन्नयत्किञ्चित्सत्त्वएव कार्य्योत्पादनात्।

व्यक्तिजन्यानन्तवह्निव्यक्तिषु जातिद्वयकल्पने लाघवमिति तदेव कल्प्यते। न च जातौ योग्यानुपलब्धिबाधः, गोमयवृश्चिकप्रभव*वृश्चिकयोरीषच्छ्यामलकपिलत्वव्यङ्ग्यवैजात्यस्य प्रत्यक्षसिद्धत्वात्। तृणादिजन्याग्निष्वपि तृणजन्यत्वज्ञानान्तरं मणिजन्यव्यावृत्तानुगतबुद्धेर्जातिविषयत्वात्, बाधकाभावात्। ननु तृणादीनामग्नौ कारणत्वग्रहे शक्तिवैजात्ययोरन्यतरकल्पनं, तद्ग्रहश्च नान्वयव्यतिरेकाभ्यां, व्यभिचारात्। अथारणिमण्यभाववति स्तोमविशेषे तृणं विना न वह्निः, तृणान्वयेऽवश्यं वह्निरित्यन्वयव्यतिरेकाभ्यां, तत्रैव स्तोमे इतरकारणसमवधाने तृणान्वयेऽवश्यं वह्निरिति नियतेनान्वयेन वा, रासभव्यावृत्तेन तृणादिकारणताग्रहः इति चेत्। न, तृणं विनाऽपि वह्निरिति ज्ञाने सति वह्निनियतपूर्ववर्तित्वस्य कारणत्वस्य ग्रहीतुमशक्यत्वात्, अबाधिताभावग्रहे भावग्रहस्याभावात्।

मैवम्। (१)उक्तग्राहकैर्वह्निनिष्ठकार्यतानिरूपितकारणतावच्छेदकरूपवत्त्वं तृणस्य, तृणनिष्ठकारणतानिरूपितकार्यतावच्छेदकरूपवत्त्वं वह्नेर्वाऽकार्यकारणव्यावृत्तं परिच्छिद्यते, न तु तृणत्वेन कारणत्वं वह्नित्वेन कार्यत्वं वा। तच्चोभयथाऽपि सम्भवति; वह्नित्वेन कार्यत्वमेकशक्तिमत्त्वेन कारणतया वा, तृणत्वेन कारणता वह्निविशेषत्वेन

---

* गोमयप्रभववृश्चिकप्रभवयोः,—इति सो॰ पु॰।

---

(१) उक्तग्राहकैरिति अन्वयव्यतिरेकाभ्यां नियतेनान्वयेन चेति बहुवचनोपपत्तिः। अधिकमस्यानुमानप्रकाशे प्रपञ्चितम्।

कार्यतया वा। तत्र च विनिगमकमुक्तमेव। (१)एतेन मण्याद्य-जन्यवह्नौ तृणादीनां हेतुत्वं गृह्यते इत्यपास्तम्। (२)अन्योन्याश्रयाच्च। मणिजन्यत्वग्रहे हि तदजन्यत्वग्रहः, तृणजन्यत्वेन च तद्ग्रह इति। तथापि यत्र कार्ये वैजात्याभावः सामग्रीभेदश्च तत्र का गतिः? यथा द्रव्यनाशः क्वचित् प्रतियोग्याश्रयनाशात्, क्वचिदसमवायि-कारणनाशात्। नचाश्रयनाशाजन्यद्रव्यध्वंसत्वावच्छिन्नं प्रत्यसमवायि-नाशस्य नियतत्वात् कारणत्वग्रहः, उक्तरीत्याऽन्योन्याश्रयात्। उच्यते। (३)निमित्तकारणेतरकारणनाशत्वेन कारणत्वम्। यद्वा, विद्यमाना-

---

(१) एतेनेति व्यवस्थापितजातीनामेव लाघवादवच्छेदकत्वेनेत्यर्थः।

(२) अन्योन्याश्रयाच्चेति वह्नौ मणिजन्यत्वे गृहीतएव मणिजन्यवह्निभिन्न-वह्नित्वेन तृणजन्यत्वग्रहः, तृणजन्यत्वे च वह्नौ गृहीतएव तृणजन्य-वह्निभिन्नवह्नित्वेन मणिजन्यत्वग्रहइत्यन्योन्याश्रयादित्यर्थः। अन्यथा वह्निमात्रस्यैव तदजन्यत्वेनोपस्थितौ वह्नित्वावच्छिन्नइतरव्यभिचारादेव हेतुत्वग्रहानुपपत्तेः। तथा च विशेषणोपादानायासोऽपि व्यर्थ इति भावः।

(३) निमित्तकारणेति न चेन्धननाशादपि वह्निनाशादननुगमः, तत्रेन्धन-नाशाद्वह्न्यन्तरं नोत्पद्यते पूर्ववह्निस्त्ववयवविभागन्यायेनैव नश्यती-त्युपगमात्। एवं शरीरनाशोऽपि नादृष्टनाशजन्यइत्यभ्युपगमे-नेदम्। ननु निमित्तकारणत्वं समवाय्यसमवायिभिन्नकारणत्वमिति कारणत्वान्तर्भावे गौरवं, तदनन्तर्भावे तदन्यान्यत्वमवच्छेदकं पर्य्यव-स्यति, तच्चानभ्युपगतमिति चेत्। न, तदन्यान्यनाशत्वस्याच तत्पर्य्य-वसानात्। तथाच प्रतियोग्यनुगमकतया तत्प्रवेशे तद्घटितस्या-वच्छेदकत्वं न तु तस्यैव, अनभ्युपगतश्च तदिति भावः। केचित्तु, एतदस्वरसादेवाह यद्वेति।

अयद्रव्यनाशे असमवायिनाशोहेतुरेवं सासमवायिकारणकद्रव्यनाशे प्रतियोग्याश्रयनाशः। [१]तथाप्युभयजन्ये द्रव्यनाशे का गतिः? [२]आश्रयनाशाजन्यद्रव्यनाशं प्रत्यसमवायिनाशस्य हेतुत्वात् तस्य चाश्रयनाशजन्यत्वात्। अचाङ्गः। [३]तच्चेतरसमवधाने तदुभयभावाभावाभ्यां

(१) तथापीति न चाश्रयनाशे तदाश्रितद्रव्यतदसमवायिनोर्युगपदेव नाशादिदमसम्भवीति वाच्यं समवायिनाशसमकालं विभागाद्यत्रासमवायिनाशस्तत्र तत्सम्भवात्।

(२) आश्रयनाशाजन्येत्युपलक्षणं, असमवायिनाशाजन्यद्रव्यनाशं प्रत्याश्रयनाशस्य हेतुत्वात् तस्य चासमवायिनाशजन्यत्वादित्यपि द्रष्टव्यम्।

(३) तच्चेतरेति नचाविद्यमानोभयकद्रव्यनाशत्वावच्छिन्नेऽसमवायिनाशसहितसमवायिनाशत्वेन हेतुत्वमस्तु, तथाच कथं व्यक्तिविशेषे व्यक्तिविशेषस्य हेतुत्वं, अन्यथा अनन्तसामग्रीकल्पनापत्तेरिति वाच्यं, तत्रैव तात्पर्य्यात्। नचात्राप्यन्यतरस्यावच्छेदकत्वे विनिगमकाभावः, असमवायिनाशत्वादिना तदुभयोरपि हेतुत्वादेव। अतएव सामग्रीभेदः, अन्यत्रान्यतरस्यैव हेतुत्वात्। नचात्राप्यन्यतरस्यैव हेतुत्वमस्तु कार्य्यतावच्छेदकभेदाच्च सामग्रीभेदइति वाच्यं, विनिगमनाविरहेणोभयोरपि तुल्यत्वात्। वस्तुतस्तु समवायिकारणनाशाद्द्रव्यगुणकर्म्मणां नाशदर्शनात् तत्तन्नाशस्याननुगमादनुगतस्य सति सम्भवे त्यागायोगादविद्यमानाश्रयकासमवेतकार्य्यनाशत्वावच्छेदेनास्य हेतुत्वकल्पनात् द्रव्यनाशेऽपि तथा। तथाच युगपत् समवाय्यसमवायिनाशयोरुत्पत्तावपि तन्निष्ठकार्य्यमात्रनाशएवाश्रयनाशोहेतुः। तथाच न सामग्रीभेदः। अतएव समवायिनाशस्थलेऽपि तज्जन्यासमवायिनाशस्यैव द्रव्यनाशकत्वं क्लृप्तत्वादित्यपास्तं,

मनुमियात् इति* किमनुपपन्नम्। एवं तर्हि धूमा-दावपि कश्चिदनुपलक्षणीयो विशेषः स्यात् यस्य दह-नापेक्षेति न धूमादिसामान्याद्वह्निसामान्यादिसिद्धिः। एतेन व्यतिरेको व्याख्यातः। तथा च कार्य्यानुपलब्धि-

---

व्यक्तिविशेषभावाभावाद्व्यक्तिविशेषं प्रति तदुभयव्यक्त्योरनन्यथासिद्धयोः कारणत्वं गृह्यते इत्येषा दिक्।

ननु, कार्यवैजात्ये तृणस्य वह्निविशेषइव वह्नित्वेन धूमविशेष-एव कारणत्वं न धूममात्रे इति शङ्कया न कार्यात्कारणं क्वाप्यनु-मीयेत, यदि चोपस्थितरूपे व्यभिचाराभावात्तेनैव रूपेण कार्यत्व-ग्रहस्तर्हि कारणतायामपि यत्रोपस्थितरूपे व्यभिचारस्तत्रैव रूपा-न्तरेण कारणताग्रहइति तुल्यमित्याह एवं तर्हीति। एवं वह्नेर्धूम-विशेषएव प्रयोजकत्वात् वह्निमात्रव्यतिरेकाद्धूममात्रव्यतिरेकोनानु-मीयेतेत्याह एतेनेति। निषेध्यतयेति शेषः। तथा चेति विपक्ष-

---

* इति,— इति नास्ति श्रा० पु०।

---

शुण्ठ्यादिनाशे तस्यापि क्लृप्तत्वात्। किञ्चाविद्यमानाश्रयकद्रव्यनाशे आश्रयनाशोहेतुरविद्यमानासमवायिकारणकद्रव्यनाशेऽसमवायिना-शोहेतुरस्तु। तथाच क्लृप्तसामग्रीतएव प्रकृतकार्य्योपपत्तौ न साम-ग्रीभेदः। अविद्यमानता च द्रव्यनाशपूर्व्वक्षणे बोध्या, तेन तत्सम-कालाविद्यमानत्वमादाय न व्यभिचारइति विद्वद्भिः परिचिन्तनीय-मिति। एतत् सर्व्वमभिसन्धायोक्तं दिगिति।

लिङ्गभङ्गे स्वभावस्याप्यसिद्धेर्गतमनुमानेनेति* चेत्, प्रत्यक्षानुपलम्भगोचरो जातिभेदो [न] कार्य्यप्रयोजक इति वदतोबौद्धस्य शिरस्येष प्रहारः। अस्माकन्तु यत्सामान्याक्रान्तयोर्ययोरन्वयव्यतिरेकवत्ता तयोस्तथैव हेतुहेतुमद्भावनिश्चयः। तथाचावान्तरविशेष-

---

बाधकमानवेदनीयो हि स्वभावनियमोबौद्धानां, बाधकं च कार्य्यानुपलब्धी, ततस्तद्भङ्गे कथमनुपायकः सिध्येदित्यनुमानमात्रविषय- [न] स्त्विधैव तदुपगमादित्यर्थः। तदेतत् दूषणं बीजत्वसामान्यं प्रत्यक्षसिद्धं अङ्कुरे न प्रयोजकं, किन्तु तद्विशेषः कुर्व्वद्रूपत्वमतीन्द्रियमिति वदतो बौद्धस्य, नास्माकमित्याह प्रत्यक्षेति। अप्रामाणिकबीजकुर्व्वद्रूपत्ववदप्रामाणिकएव कार्य्यविशेषो यस्य कारणविशेषापेक्षेति बौद्धस्य दोषइत्यर्थः। अस्माभिस्त्वप्रामाणिकोविशेषोनोपेयते इति भावः। अस्माकं त्विति यत्र कारणसामान्यं कार्य्यसामान्यं व्यभिचारि दृश्यते, तत्रैव विशिष्यकारणताग्रहः, यत्र तु स न दृश्यते तत्रोपस्थितसामान्येनैव कार्य्यकारणताग्रहः। यदि च तृणादिवह्निविशेषात् धूमविशेषः स्यादित्युच्यते, तदा नेदमनिष्टमित्यर्थः।

ननु, कार्य्यकारणभावग्रहो न तावद्व्यक्त्योरेव, स हि व्यक्तिमात्र-

---

* स्वभावस्याप्यसिद्धेः हतमनुमानेनेति,—इति क्री॰ पु॰।

मपेच्य तद्विशेषं वा? नाद्यः, [१]यदि घटोयावत्पटजातीयापेचणी-यापेचः स्यात् पटजातीयः स्यात् घटजातीयो न स्यादित्यतएव बाधकात्। विशेषोऽपि पूर्व्ववर्त्तित्वमात्रं वा तत्तद्व्यक्तित्वं वा? नाद्यः, यावत्पटादिजनकजन्यत्वे घटादिव्यक्तीनामभेदाद्वैजात्यापत्तेः। रासभादिसाधारण्याच्च। [२]अतएव नान्त्यः, व्यक्त्योरेव कार्यकारणभावे पूर्व्वं तदनिश्चये प्रवृत्त्याद्यनुपपत्तेश्च। नापि जात्यपेचया, भचितविनष्टबीजादिव्यक्तिष्वप्यापत्तेः। न चेष्टापत्तिः, तस्य सर्व्वथा कार्याजननाच्छिलाशकलतुल्यत्वात्।

मैवं, बीजादिव्यक्तीनामेव बीजत्वादिना सामान्येनानन्यथासिद्धान्वयव्यतिरेकवत्त्वेन कारणत्वात्। क्वचित्कार्यव्यतिरेकस्य सहकारिवैकल्यात्। अतएव शिलाशकलवैषम्यम्। न हि यस्मिन् सति कार्यं भवत्येव तत्कारणं, अपि तु [३]यस्मिन् सत्येव भवति, एतच्च भचितविनष्टेऽपि सामान्यतोऽस्त्येव। न च सामान्येनापि रूपेण या व्यक्तिः कार्यं जनयत्येव सा कारणं न त्वन्येति वाच्यं, यागादौ बहुवित्तव्ययायाससाध्ये, यागत्वेऽपि किमियं व्यक्तिः स्वर्गजनिका न

---

(१) उभयत्र व्यक्तिमात्रापेचित्वेन यावत्पटापेचणीयापेचित्वं घटस्य बोध्यम्। एवं पूर्व्ववर्त्तिमात्रापेचित्वेन यावत्पटादिजनकजन्यत्वं घटादेर्बोध्यम्।

(२) अतएवेति रासभादिसाधारण्यादेवेत्यर्थः।

(३) यस्मिन् सत्येवेति यद्धर्म्मावच्छिन्ने सत्येव सहकारिसमवधानात् कार्य्यं भवति तदवच्छिन्नं कारणमित्यर्थः। तदिदमाह सामान्यतइति।

सद्भावेऽपि न नोविरोधः। किं पुनस्तार्णादौ दहनसामान्यस्य प्रयोजकम्? तृणादीनां विशेषएव नियतत्वादिति चेत्, तेजोमात्रोत्पत्तौ पवनोनिमित्तं अवयवसंयोगोऽसमवायी तेजोऽवयवाः समवायिनः। इयमेव

वेति संशये प्रवृत्त्यभावापत्तेः। [१]यदि सा पापव्यक्तिर्नरकजनिका तदा कृतेऽपि प्रायश्चित्ते नरकं जनयिष्यत्येव अन्यथा तु प्रायश्चित्तं विनाऽपि न नरकमित्युभयथाऽपि प्रायश्चित्ते प्रवृत्त्यनुपपत्तेश्चेति। किं पुनरिति दहनगतं सामान्यं दहनसामान्यं तेजस्त्वकल्पितत्वादि, तेन नोत्तरविरोधः। तृणादीनामिति तथा च सामान्यमाकस्मिकं स्यादिति भावः। तेजोमात्रेति तेजःपदङ्कार्यतेजःपरम्। न च सूर्यालोके व्यभिचारात् न पवनस्तेजोमात्रे निमित्तमिति वाच्यम्, [२]निर्वातस्थितस्य*

* निवातस्य,—इति पाठान्तरम्।

(१) यागादौ बहुवित्तव्ययायाससाध्ये फलावश्यम्भावनिश्चये सत्येव प्रवृत्तेरिष्टापत्तिरिति यदि ब्रूयात्, तदा दोषान्तरमाह यदि सेति। नचाजनकव्यक्तेरपि तज्जातीयतया द्वेषात्तन्नाशार्थं प्रवृत्तिरिति वाच्यं, दुःखाजनकत्वे द्वेषस्याप्यभावात्, निःप्रयोजने द्वेषमात्रात् कृतेरनुत्पत्तेश्चेति भावः।

(२) निवातस्थेति ननु नैतावता कारणत्वं, न हि कारणाभावेन कार्यध्वंसः किन्त्वनुत्पादइति चेत्। न, नाशपदेन प्रवाहानुत्पादेनात्यन्तोच्छेदस्य विवक्षितत्वात्। तथाचाश्वनाशितया पूर्वप्रदीपनाशेऽपि वातं विनाऽग्रिमतदनुत्पादादित्यत्र तात्पर्य्यम्।

सामग्री गुरुत्ववद्द्रव्यसहिता पिण्डितस्य। इयमेव तेजोगतमुद्भूतस्पर्शमपेक्ष्य दहनं; तत्रापि जलं प्राप्य दिव्यं, पार्थिवं प्राप्य भौमं, उभयं प्राप्यौदर्य्यमारभते इति स्वयमूहनीयम्।

---

दीपस्य वातं विना नाशदर्शनेन तत्र पवननिमित्तकत्वनिश्चया-दन्यत्रापि [१]तेजस्त्वेन पवनजन्यत्वानुमानात्। [२]न च वह्नित्वमुपाधिः, तैजसशरीरस्य पाञ्चभौतिकत्वेन पवनजन्यतया तत्र साध्याव्यापकत्वात्। [३]आगमोऽप्यत्रास्त्येवेत्येके। पवनोत्कर्षेण वह्न्युत्कर्षदर्शनात् तेजोमात्रे तस्य निमित्तत्वं न वह्निमात्रे, सामान्यस्य सामान्यं प्रति प्रयोजकत्वे विशेषस्योपाधितायामतिप्रसङ्गा*दित्यन्ये। पिण्डितस्य सुव-

---

* मप्रयोजकत्वा,—इति ह० पु०।

---

(१) तेजस्त्वेन कार्य्यतेजस्त्वेन।

(२) न चेति न च पवनध्वंसादिषु साध्याव्याप्तिः, साधनावच्छिन्नसाध्य-व्यापकत्वादिति भावः। अतएवाह तैजसेति।

(३) आगमोऽपीति ज्योतिरुत्पद्यते वायोरित्यादिविष्णुपुराणरूपइत्यर्थः। यद्विशेषयोरिति न्यायात्तावता वह्निसामान्यमात्रे तद्धेतुत्वं सिध्यति न तु तेजोमात्रे, अन्यथा द्रव्यमात्रएव तदापत्तेरित्यनुशयादाह अन्ये इति।

तथाप्येकमेकजातीयमेव वा किञ्चित् कारणमस्तु कृतं विचित्रेण, दृश्यते ह्यविलक्षणमपि विलक्षणाने-

र्णस्य। दिव्य(१)मिति दृष्टान्तार्थं, तच्चाप्रश्नात्। एतावता कारण-मात्रे सिद्धेऽपि सापेक्षत्वादित्यत्र सिद्धसाधनं शङ्कते तथापीति। एकमिति त्रिदण्डि* मतसमुत्थानं, तेषां ब्रह्मण एव सकलकारण-त्वात्। एकजातीयमिति साङ्ख्यमतं, तेषां पुरुषाणां भेदात् प्रति पुरुषं च महत्तत्त्वानां भेदेऽपि प्रकृतिविकारत्वात् (२)प्रकृतेश्चैकत्वादे-कजातीयत्वात्। तथा च कारणस्यैकव्यक्तित्वेनैकजातीयत्वेन वा नेश्वरसिद्धिरस्मदादिनाऽपि (३)तद्द्रष्टुं शक्यत्वादिति प्रकृतसङ्गतिः। न चाविचित्रात्कारणाद्विचित्रं कार्यमदृष्टचरमित्याह दृश्यते हीति।

* एकदण्डि,—इति सो॰ पु॰।

(१) दिव्यमितीति यद्यपि दिव्यस्यापि दहनतया तद्गतसामान्यमपि प्रश्नविषयः, तथापि तार्णादिदहनसामान्यस्य प्रश्नविषयत्वादस्या-तथात्वमित्याशयः। यद्यप्येवं पिण्डितस्येत्यप्ययुक्तं तस्याप्यप्रश्नात्, तथापि तदपि दृष्टान्तार्थमेव। एवञ्च पिण्डितस्य सुवर्णस्य दिव्य-मिति दृष्टान्तार्थमित्येकग्रन्थोबोध्यः। दिव्यमितीत्युपलक्षणं, उद-र्यस्यापि दृष्टान्तत्वमित्येके। तार्णपदस्य पार्थिवेन्धनदहनपरतया तत्र प्रश्न एवेत्यन्ये।

(२) प्रकृतेश्चेति तथाचैकप्रकृतिविकारत्वान्महत्तत्त्वादीनामेकजातीयत्व-मित्यर्थः।

(४) तद्द्रष्टुमिति तदित्यव्ययं षष्ठ्यन्तं, तेन तस्य द्रष्टुं शक्यत्वादित्यर्थः।

ककार्य्यकारि, यथा प्रदीपएकएव तिमिरापहारी वर्त्तिविकारकारी रूपान्तरव्यवहारकारीति चेत्। न, वैचित्र्यात् कार्य्यस्य।

एकस्य न क्रमः क्वापि वैचित्र्यञ्च समस्य न।
शक्तिभेदोन चाभिन्नः स्वभावोदुरतिक्रमः॥ ७॥

---

(१)तिमिरमालोकाभावः, तदपहारश्चालोकः, तत्कारी दीपः पिण्डितरूपः। रूपान्तरं घटादिरूपम्। (२)प्रदीपे च न स्वरूपभेदसहकारिभेदावित्यर्थः। तथा च तद्दृष्टान्तेनान्येषामपि विचित्रकार्याणामविचित्रकारणजन्यत्वमनुमेयमिति भावः। न वैचित्र्यादिति (३)दृष्टान्तेऽप्यविचित्रकारणजन्यत्वमसिद्धमिति भावः। एकस्येति (४)एकस्य कारणस्य संबन्धी न क्रमः कार्याणां, समस्यैकजातीयस्य च कारणस्य संबन्धि न वैचित्र्यं कार्याणां, शक्तिविशेषो न कार्यवैचित्र्यहेतुः, धर्म्यभिन्नो यतः। चोहेत्वर्थे। विचित्रकार्यजननस्वभावादपि न

---

(१) ननु तिमिरं तेजोऽभावः तदपहारएव प्रदीपो न तु तत्कारी, अभेदे जन्यजनकभावानुपपत्तेरित्यतआह तिमिरमिति। तथाच व्यक्तिभेदमादायाविरोधइति भावः।

(२) प्रदीपे चेत्यापाततः।

(३) अतएव दूषयति दृष्टान्तेऽपीति।

(४) एकस्य कारणस्य क्रमो न पराभ्युपगतोऽपीत्यनाक्षिप्तसमाधानमिति पूरयित्वा व्याचष्टे एकस्येति। एवमग्रेऽपि।

न तावदेकस्मादनपेक्षादनेकं, अक्रमात् क्रमवत्का-र्य्यानुपपत्तेः। क्रमवत्तावत्कार्य्यकारणस्वभावत्वात्तस्य तत्तथा यौगपद्यवदिति* चेत्, अयमपि क्षणभङ्गे

---

कार्यवैचित्र्यमुपपाद्यं, एकत्र कार्ये यत्स्वभावो जनकः तदितरकार्य-जननेऽपि तत्स्वभावो वाच्यः, अन्यथैकस्य स्वभावभेदादेकत्वादिहानि-प्रसङ्गादित्येकस्वभावजन्यत्वेन विजातीयकार्याणामप्येकजात्यं स्यादि-त्यर्थः। अक्रमादिति [१]क्रमप्रयोजकसहकारिविधुरादित्यर्थः। क्रमव-दिति सहकारिविरहेऽपि क्रमिककार्यार्जनशीलत्वादक्रमस्यापि क्रमिककार्यजनकत्वं स्यादित्यर्थः। यौगपद्यवदिति सप्तमीसमर्था-द्वतिः। यथा कार्य्ययौगपद्ये अयुगपत्स्वभावोऽपि दीपः कारणमेव-मक्रमोऽपि क्रमिककार्य्येषु कारणं स्यादित्यर्थः। तत्कार्य्यं, तथा क्रम-वदित्यर्थः। अयमपीति समर्थस्य विलम्बानुपपत्तेरनेकानि क्रमि-काणि कार्य्याण्युत्पत्त्यनन्तरमेव कुर्य्यादित्यत्र समर्थोऽपि न तथा क्रमवत्तावत्कार्य्यकरणस्वभावस्योत्पादादिति न विरुद्धधर्माध्यासइति क्षणभङ्गपक्षे परिहारः सम्भवी, स्थैर्य्यपक्षे तु क्रमिकसहकार्य्यपेक्षां विना तादृशः स्वभावएव न स्यादित्यर्थः।

---

* यौगपद्यवत्तत्तथेति,—इति प्रकाशकारसम्मतः पाठः।

---

(१) अक्रमादपि नित्यात् कालादेः क्रमेण कार्य्याणीत्यतआह क्रम-प्रयोजकेति।

परिहारो न तु सहकारिवादे। पूर्व्वपूर्व्वानपेक्षायां क्रमस्यैव व्याहतेः, क्रमनियमे त्वनपेक्षाऽनुपपत्तेः।

नाप्यनेकमविचित्रं, यदि ह्यन्यूनमनतिरिक्तं वा दहनकारणमदहनस्यापि हेतुर्नासावदहनो दहनो वा स्यादुभयात्मको वा स्यात्, न चैवम्। शक्तिभेदादयम-

पूर्व्वपूर्व्वक्रमिककार्य्यानपेक्षउत्तरकार्य्योत्पादस्तत्सापेक्षो वा? आद्ये पूर्व्वेति। विलम्बे हेत्वभावादित्यर्थः। अन्त्ये क्रमेति। तस्यैव द्वितीयस्य कारणस्यापेक्षणादित्यर्थः। एकजातीयं कारणं दहनजनकैकस्वभावं वा, अदहनजनकैकस्वभावं वा, उभयजनकस्वभावं वा? आद्ये दोषमाह नासाविति। कारणाभावादित्यर्थः। भवन् वा दहनात्मकोभवेदित्याह दहनोवेति। इतरदहनवत्तद्धेतुस्वभावप्रसूतत्वादित्यर्थः। दहनजनकैकस्वभावस्यादहनजनकत्वे व्याघातोऽपीति भावः। द्वितीये तु यथाव्याख्यातवैपरीत्यं फक्किकाऽर्थः, नासौ दहनोऽदहनो वा स्यादिति कृत्वा। तृतीये उभयात्मकइति। [१]अत्र च पटो यदि यावद्दहनजनकजन्यः स्यात् पटोन स्यात् दहनो वा स्यादित्यदहनदहनत्वयोरापादनं, अदहनो वा यदि तथा स्यात् दहनः स्यादित्युभयापादनमिति [२]नाप्रसिद्धिः। ननु, दहनजनकस्यैव धर्मभेदमुपादायादहनजनकत्वान्नोक्तदोषइति शङ्कते शक्तिभेदादिति।

(१) यथाश्रुते वैयधिकरण्यादाह अत्र चेति।
(२) नाप्रसिद्धिरित्युपलक्षणं, नापि वैयधिकरण्यमित्यपि द्रष्टव्यम्।

दोष इति चेन्न, धर्म्मिभेदाभेदाभ्यां तस्यानुपपत्तेः। असङ्कीर्णोभयजननस्वभावत्वादयमदोषइति चेत्, न, न हि स्वाधीनमस्यादहनत्वं, अपि तु तज्जनकस्वभावाधीनम्। तथाच तदायत्तत्वाद्दहनस्यापि तत्त्वं केन वारणीयं, न हि तस्मिन् जनयितव्ये नासौ तत्स्वभावः।

तस्माद्विचित्रत्वात् कार्य्यस्य कारणेनापि विचित्रेण भवितव्यम्। न च तत्स्वभावतस्तथा, ततः सहकारि-

स धर्मभेदो न धर्म्मभिन्नः, तथा सति धर्मिणोऽभिन्नत्वात्तदभिन्नस्य शक्तिरूपधर्म्मस्य भेदानुपपत्तेः; नापि धर्मिभिन्नः, तस्यैव कारणान्तरत्वे प्रतिज्ञातैकजातीयकारणत्वव्याघातापत्तेः; नापि धर्मिणोभिन्नाभिन्नोविरोधादिति परिहरति धर्मिभेदाभेदाभ्यामिति ।

परस्परविलक्षणानेकजनकस्वभावस्य कारणत्वमिति नोभयात्मकत्वमेकस्येत्याह असङ्कीर्णेति। जनितादहनस्य दहनेऽपि जनयितव्ये अदहनजनकस्वभावत्वमनुवर्त्तते न वा? आद्ये न हीति। अस्य अदहनत्वेनाभिमतस्य। अन्ये पुनरेकजातीयकारणत्वव्याघातः। तस्यैवादहनजनकस्वभावत्वमतिक्रम्य स्वभावान्तरेण दहनजनकत्वादिति भावः। तथा चेति दहनोयद्यदहनजनकस्वभावजन्यः स्याददहनः स्यादिति, एवं विपरीतमप्यापाद्यमित्यर्थः ।

विचित्रकार्य्याणां विचित्रकारणजन्यत्वे प्रत्यक्षानुमाने प्रमाणमुपसंहरन्नेवाह तस्मादिति। ननु स्वरूपमेव विचित्रमस्तु कृतं सहकारिवैचित्र्येणेत्यतआह न चेति। ननु सहकारिवैचित्र्यानुप्रवेशं

वैचित्र्यानुप्रवेशः। न तु क्षणोऽपि तदनपेक्षस्तथा-भवितुमर्हतीति।

अस्तु दृष्टमेव सहकारिचक्रं किमपूर्व्वकल्पनयेति चेन्न, विश्ववृत्तितः।

विफला विश्ववृत्तिर्नो न दुःखैकफलाऽपि वा।
दृष्टलाभफला नापि विप्रलम्भोऽपि नेदृशः॥ ८॥

यदि हि पूर्वपूर्वभूतपरिणतिपरम्परामात्रमेवोत्त-

---

विनैव तथोत्पन्नक्षणस्वरूपमुपादाय कार्य्यवैचित्र्यमुपपत्स्यतइत्यत आह नत्विति। तदनपेक्षः सहकार्य्यनपेक्षः, तथा विचित्रकार्य्यार्जकः। बौद्धमते सहोत्पन्नविचित्रसहकारिसहितस्यैव विचित्रकार्य्यजनकत्वादित्यर्थः। तदेवं विलक्षणसामग्री विचित्रकार्य्यजनिकेति प्रसाधितम्।

सम्प्रति दृष्टकारणमेलकात्मिकैव सा तथा, तदधिष्ठानं चास्मदादिभिरेव शक्यमिति पुनरपि सिद्धसाधनमित्याक्षिपति अस्त्विति। विश्ववृत्तितः विश्वेषां लोकानां वृत्तेः प्रवृत्तेः अदृष्टं सिध्यतीत्यर्थः। तदेव प्रपञ्चयति विफलेति। (१)भूतचैतन्ये भूतानामेव परिणतिभेदाद्वासनातएवोत्तरकार्य्यमिति न परलोकसिद्धिरित्यत्र दोषमाह यदि हीति।

---

(१) भूतचैतन्यइति भूतस्य शरीरादेर्भस्मीभावादात्मनश्चानङ्गीकारात् कस्य परलोकइति न तत्सिद्धिरित्यर्थः।

रोत्तरनिबन्धनं, न परलोकार्थी कश्चिदिष्टापूर्त्तयोः प्रवर्त्तेत। न हि निष्फले दुःखैकफले वा कश्चिदेकोऽपि प्रेक्षापूर्वकारी घटते, प्रागेव जगत्। लाभपूजाख्यात्यर्थमिति चेत्, लाभादयएव किंनिबन्धनाः? न हीयं प्रवृत्तिः स्वरूपतएव तद्धेतुः, यतोवाऽनेन लब्धव्यं योवैनं पूजयिष्यति, स किमर्थम्? ख्यात्यर्थमनुरागार्थञ्च जनोदातरि मानयितरि च रज्यते, जनानुरागप्रभवा हि सम्पद इति चेत्। न, नीतिनर्म्मसचि-

---

दृष्टं यागादि पूर्त्तं तडागादि। नहीति बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानजन्यत्वात् प्रवृत्तेरिति भावः। प्रागेवेति निपातसमुदायोऽतिशयार्थः। लाभेति तथाच दृष्टेष्टसाधनताज्ञानादेव तत्र प्रवृत्तिर्न पारलौकिकेष्टसाधनताज्ञानादिति भावः। न हीति। (१)चिरातीतायामेव यागादिक्रियायां लाभाद्युत्पादादिति भावः। यद्वा, स्वरूपतोलाभादिहेतुत्वे, नास्तिकैरपि तत्करणप्रसङ्गादिति भावः। यतोवेति। लाभाद्युद्दिश्य यागादौ प्रवर्त्तमानाय परेण धनदानमदृष्टार्थमेवेति तत्सिद्धिरित्यर्थः। ख्यात्यर्थमिति दृष्टार्थमेव तद्दानमिति नादृष्टमुद्देश्यमिति भावः। नीतिनर्म्मेति राजादिभिः प्रयोजनमुद्दिश्यैव दानादनस्थतपस्विभ्यः प्रयोजनाननुसन्धानेन दाना-

---

(१) चिरेति तथाच तद्धेतुत्वमप्यदृष्टद्वारैव स्यादिति भावः।

वेष्वेव तदर्थं दानादिव्यवस्थापनात्। त्रैविद्यतपस्विनो-धूर्त्तवकाएवेति चेन्न, तेषां दृष्टसम्पदं प्रत्यनुपयोगात्। सुखार्थं तथा करोतीति चेन्न, नास्तिकैरपि तथा-करणप्रसङ्गात्। सम्भोगवत्। लोकव्यवहारसिद्धत्वाद-फलमपि क्रियते वेदव्यवहारसिद्धत्वात् सन्ध्योपासनव-

---

भावादित्यर्थः(१)। त्रैविद्येति। त्रिवेदीविदोऽपि तपस्विनः परप्रतारणा-र्थन्तपसि प्रवर्तन्तइत्यर्थः। तेषामिति। दृष्टप्रयोजनमुद्दिश्यैव पर-प्रतारणात् तेषाञ्च दृष्टे निस्पृहत्वात् तदसम्भवः, प्रच्छन्नमपि परोपनीतधननिस्पृहैस्तपःकरणादित्यर्थः। वेदेति। (२)सन्ध्योपासन-मकरणे निन्दोपदेशात्प्रायश्चित्तोपदेशाच्च नित्यम्। नित्ये च यदि फलार्थिनः प्रवृत्तिः स्यात्, तदा यागवन्नित्यताभङ्गप्रसङ्गइत्यफलैव* तत्र प्रवृत्तिः। कार्यताज्ञानं हि तत्र प्रवर्तकम्। तच्च लोके पाका-दाविष्टसाधनताज्ञानात्कार्यताऽनुमित्या निर्वहति। वैदिके च नित्ये कार्यताज्ञानं वेदाधीनमिति किमिष्टसाधनताज्ञानेन? न च नित्यापूर्वमेव फलं, तथापि नित्यताभङ्गात्। (३)काम्यस्थले धर्म्मि-

---

* इत्यफलएव,—इति ह० ऊ०।

---

(१) दानाभावादिति दानाभावापत्तेरित्यर्थः। दृष्टप्रयोजनस्य तत्राभावा-ददृष्टस्य चानभ्युपगमादिति भावः।

(२) निःफलत्वेऽपि तत्र प्रवृत्तिमुपपादयति सन्ध्योपासनमिति।

(३) काम्यस्थले इति अपूर्व्वस्येति शेषः। तथाच तद्वन्नित्यापूर्व्वस्यापि न स्वतः प्रयोजनत्वमिति भावः।

दिति चेत्, गुरुमतमेतत्, न तु गुरोर्म्मतम्। ततोनेदमनवसरएव वक्तुमुचितम्। वृद्धैर्विप्रलब्धत्वाद्वालानामिति चेन्न, वृद्धानामपि प्रवृत्तेः। न च विप्रलम्भकाः स्वात्मानमपि विप्रलभन्ते। तेऽपि वृद्धतरैरित्येवमना-

---

ग्राहकमानात्काम्यसाधनत्वेनैव सिद्धेर्गौणप्रयोजनतया स्वतः प्रयोजनत्वाभावाच्च। लोके प्रवृत्ताविष्टज्ञानान्वयव्यतिरेकाविष्टसाधनताज्ञानजननद्वारा कार्य्यताज्ञानएवोपक्षीणाविति फलज्ञानं न प्रवृत्तिहेतुः। न चान्यत्रापि निःफले प्रवृत्तिप्रसङ्गः, वेदस्येष्टसाधनत्वस्य वा लिङ्गस्य कार्य्यज्ञानहेतोरभावादिति जरन्मीमांसकमतं दृष्टान्तइत्यर्थः। अत्र सोपहासमाह गुरुमतमिति। गुरोः प्रभाकरगुरोः, गुरु महद्वा मतमेतत्, न त्वस्मद्गुरोर्म्मतमित्यर्थः। [1]निःफले प्रेक्षावतां प्रवृत्तेरनुत्पादनियमात्। प्रयोजनज्ञानस्य प्रवृत्तिहेतुत्वेन निःफले कार्य्यत्वस्यायोग्यतया वेदेन बोधयितुमशक्यत्वात् प्रवर्त्तकस्य कार्य्यत्वज्ञानस्यासंभवात्। अतएव नेष्टज्ञानं कार्य्यताज्ञानएवोपक्षीणं, [2]अनन्यथासिद्धत्वादिति भावः। वृद्धैरिति, तथाच निःफलएवान्यैः

---

(१) उपहासबीजमाह निःफलइति।

(२) अनन्यथासिद्धत्वादिति यद्यपि फलेच्छाद्वारेष्टसाधनताज्ञानेऽपि तदन्यथासिद्धमित्युपपादितं प्रत्यक्षप्रकाशेऽन्यथाख्यात्यवसरे, चित्सूत्रस्वरसोऽप्येवमेव, तथापि तस्य प्रवृत्तिप्रयोजकत्वान्निःफलेऽपि प्रवृत्तिरिति मतनिराकरणमात्रे तात्पर्य्यम्। नचैवं नित्यताभङ्गप्रसङ्गः, त्रिकालकाम्यस्तवपाठवत् कामनाऽवश्यम्भावादिति भावः।

दिरिति चेत्। न तर्हि विप्रलिप्सुः कश्चिदत्र, यतः प्रतारणाशङ्का स्यात्। इदं प्रथमएव कश्चिदनुष्ठायापि धूर्त्तः पराननुष्ठापयतीति चेत्। किमसौ सर्व्वलोकोत्तरएव, यः सर्व्वस्वदक्षिणया सर्व्वबन्धुपरित्यागेन सर्व्वसुखविमुखो ब्रह्मचर्य्येण तपसा श्रद्धया वा केवलपरवञ्चन* कुतूहली यावज्जीवमात्मानमवसादयति। कथञ्चैनमेकं प्रेक्षाकारिणोऽप्यनुविदध्युः। केन वा चिह्नेनायमीदृशस्त्वया लोकोत्तरप्रज्ञेन प्रतारकइति निर्णीतः? नह्येतावतोदुःखराशेः प्रतारणसुखं गरीयः। यतः पाखण्डाभिमतेष्वप्येवं दृश्यते इति चेत्। न, हेतुदर्शना-

---

प्रतारणादाकुमारं प्रवृत्तिरिति न तत्र प्रयोजनगवेषणमिति भावः। विप्रलिप्सुरन्यथाज्ञातमर्थमन्यथाबोधयति, भ्रान्तो वा? आद्ये वृद्धानामिति। अन्त्ये कथं चैनमिति। (१)प्रत्युतानादिप्रवृत्तितया दृष्टफलनिरपेक्षतया चादृष्टफलत्वमेवानुमेयमिति भावः। यतइति। एवं पाखण्डप्रवृत्तिरपि दृष्टफलनिरपेक्षा परलोकसाधनं स्यात्, अन्यथाऽयं(२) परिशेषस्तत्रैव व्यभिचरेदित्यर्थः। हेत्विति। हेतुदर्शनेन

---

* धन्वन,—इति क्री० पु०।

---

(१) प्रत्युतेति क्वचिददृष्टफलत्वसिद्धावेव तत्, अन्यथासाध्याप्रसिद्धेरिति ध्येयम्।

(२) अयमिति विफला विश्वप्रवृत्तिरित्यादिरित्यर्थः।

दर्शनाभ्यां विशेषात्। अनादौ चैवंभूतेऽनुष्ठाने प्रतायमाने प्रकारान्तरमाश्रित्यापि बहुवित्तव्ययायासोपदेशमात्रेण प्रतारणा स्यात्, न त्वनुष्ठानागोचरेण कर्म्मणा। अन्यथा प्रमाणविरोधमन्तरेण पाखण्डित्वप्रसिद्धिरपि न स्यात्।

---

कर्मलाघववादिना तादृशी तत्प्रवृत्तिरन्यथासिद्धा, अत्र तु ब्रह्मचर्यादिदुःखमयकर्म्मप्रधानतया न तत्सम्भवइत्यादेर्द्वितीयस्तवके वक्ष्यमाणत्वादित्यर्थः। नन्विष्टापूर्तादीनां हेतुदर्शनशून्यत्वेऽपीदं प्रथमएव प्रतारकस्तद्बोधकागमस्य प्रामाण्यं भ्रमेण ग्राहयित्वा प्रेक्षावतः प्रवर्त्तयेत् इत्यतआह अनादाविति। एवंभूतेऽनादौ अविगीते परलोकसाधने। प्रकारान्तरं सादित्वं विगीतत्वञ्च। यदि वैदिकव्यवहारातिरिक्तोऽनादिरविगीतश्च व्यवहारः प्रामाणिकः स्यात्, तदाऽयमाधुनिको(१) वैदिकव्यवहारः परप्रतारणपरइति व्यवतिष्ठेत, यथाऽनादिसिद्धः पिपासोपशमनन्तोयपानमिति व्यवहारोऽन्नभक्षणं पिपासोपशमनमिति आधुनिकउपदेशः परप्रतारणपरइति निश्चीयते, न त्वेवमित्याह न त्विति। तस्मादयमेव व्यवहारः

---

(१) आधुनिकइति सादिरुपदेशइत्यर्थः। अविगीतस्येत्यपि द्रष्टव्यम्। यद्यपि वेदानिषिद्धत्वमविगीतत्वं न तच्च, तथापि शिष्टव्यवहाराविषयत्वमप्रामाणिकत्वं वा तदित्येके। परदुःखहेतुतया सामान्यतस्तत्रापि निषेधइत्यन्ये।

अस्तु दानाध्ययनादिरेव विचित्रोहेतुर्जगद्वैचित्र्यस्येति चेन्न; क्षणिकत्वात् अपेक्षितस्य कालान्तरभावित्वात्।

चिरध्वस्तं फलायालं न कर्म्मातिशयं विना।
सम्भोगोनिर्व्विशेषाणां न भूतैः संस्कृतैरपि ॥९॥

---

प्रामाणिको न परप्रतारणपर इत्यभ्युपेयमिति भावः। अनभ्युपगमे त्वप्रामाणिकत्वाविशेषात् पाखण्डापाखण्डमतभेदो न स्यात्, तथाच प्रमाणेन खण्डिताः पाखण्डा[१] इत्यपि न स्यादित्याह अन्यथेति। अस्त्विति। न तु तज्जन्यमदृष्टमित्येवकारार्थः। तथाचादृष्टाधिष्ठातृत्वेन ईश्वरानुमानमाश्रयासिद्धमिति भावः। क्षणिकत्वादिति। [२]आशुतरविनाशित्वादित्यर्थः। चिरध्वस्तमिति। फलस्य स्वर्गादेः कालान्तरभावितया न तच्चाशुविनाशिनः साक्षात्साधनत्वमिति प्रतीतसाधनत्वानुपपत्त्या तज्जन्यापूर्वकल्पनमित्यर्थः। अतिशयं विना चिरध्वस्तं कर्म्म न फलायालं समर्थमिति योजना। साक्षात्साधनत्वाभावेऽपि साधनत्वस्य [३]फलसमयपर्यन्तस्थायिव्यापारव्याप्तत्वादिति भावः। ननु

---

(१) इत्यपीति असाधारण्येनेति शेषः। तथाचोभयस्यापि पाखण्डत्वमन्यतरस्यापि वा नेति भावः।

(२) एकक्षणमात्रस्थायित्वमसिद्धमित्यतआह आशुतरेति।

(३) फलसमयेति यद्यपि चिरध्वस्तकारणत्ववादिनः क्वचिदपि व्यापाराप्रसिद्धेर्व्याप्तिरन्यतरासिद्धा, तथापि चिरातीतदण्डादिना घटाद्यजननात् परो ऽपि तथाऽङ्गीकारयितव्य इति स्वमतावष्टम्भेनोक्तमिदम्।

तस्मादस्त्यतिशयः कश्चित्। ईदृशान्येवैतानि स्वहेतुबलायातानि, येन नियतभोगसाधनानीति चेत्। तदिदममीषामतीन्द्रियं रूपं सहकारिभेदो वा? न तावदैन्द्रियकस्यातीन्द्रियं रूपं, व्याघातात्। द्वितीये त्वपूर्व्वसिद्धिः। सिद्ध्यतु भूतधर्म्म एव गुरुत्वादिवदतीन्द्रियः। अवश्यं त्वयाऽप्येतदङ्गीकरणीयम्। कथमन्यथा मन्त्रादिभिः प्रतिबन्धः। तथाहि। करतलानल-

---

चादृष्टसिद्धावपि भूतधर्म्म एव तदस्त्वित्यत आह सम्भोगइति। सम्भोगः समीचीनो नियतो भोगः निर्विशेषाणामदृष्टरूपविशेषरहितानामात्मनां न स्यात्, संहतानां भूतानां साधारणत्वादित्यर्थः। अथ स्वहेतुबलोत्पन्नस्वरूपविशेषवन्ति शरीरादीनि नियतात्मभोगसाधनानि सन्त्विति शङ्कते ईदृशानीति। एतद्विकल्प्य व्याघाताभिमतसिद्धिभ्यां परिहरति तदिदमिति। रूपं स्वरूपम्, अतीन्द्रियस्वभावत्वमित्यर्थः। सहकारिभेदोऽतीन्द्रियसहकारी। यद्वा। रूपं धर्मो जातिरूपोऽजातिरूपो वा? आद्ये न तावदिति। व्यक्तियोग्यतयैव जातेर्योग्यत्वादित्यर्थः। अन्त्यं शङ्कते सिध्यत्विति। नैतावताऽप्यात्मधर्म्मापूर्व्वसिद्धिः, भूतवृत्त्यतीन्द्रियधर्मादेवोपपत्तेरिति भावः। गुरुत्वादिवदित्यादिपदेन मीमांसकाभिमतशक्तिर्गृह्यते*। तत्र शक्तावर्थापत्तिं

---

* शक्त्यादिरुच्यते,—इति ह० पु०।

संयोगात् यादृशादेव दाहोदृष्टः, तादृशादेव मन्त्रा-दिप्रतिबन्धे सति दाहो न जायते, असति तु जा-

---

प्रमाणयति तथाहीति। शक्तौ विप्रतिपत्तिः। [१]कारणानि स्वजन्यानुकूलादिष्टातीन्द्रियभावभूतधर्मवन्ति न वा? आत्मन्यदृष्टं तथा प्रसिद्धम्। [२]यद्वा, कारणतावच्छेदकत्व* मतीन्द्रियत्वव्याप्यं

---

* कारणतावच्छेदकवत्त्व,—इति सो० पु०।

---

(१) कारणानीति वस्तुमात्रपक्षत्वे भागबाधादिरजनके पक्षापूर्वादौ तन्मते स्यादिति कारणानीत्युक्तम्। नचादृष्टस्थितिस्थापकगुरुत्वा-दिकमादायापि पृथिव्यादिष्वंशतः सिद्धसाधनम्, तद्भिन्नकारणस्यैव पक्षत्वात्। न च पक्षतावच्छेदकैक्ये तद्दोष एव नेति वाच्यम्, प्राचीन-मतेनैवोक्तत्वात्, अन्यथा अदिष्टपदप्रक्षेपानुपपत्तेः। अतएव वक्ष्य-माणहेतुपक्षतावच्छेदकयोर्नाभेदः। स्वजन्यानुकूलत्वं ताद्रूप्यसिद्धये। यद्वा, स्थितिस्थापकवतोऽपि पक्षान्तर्भावात् तमादायांशतः सिद्ध-साधनवारणार्थं तत्। तदर्थश्च स्वनिमित्तकारणकानुकूलत्वमित्याहुः। अदिष्टपदमदृष्टवदात्मसंयोगेन सिद्धसाधनवारणार्थमव्यासज्यवृत्ति-परम्। अन्यथा अधिकरणभेदेनाभावभेदानभ्युपगमे ततएव प्रति-बन्धकाभावव्यवच्छेदे भावपदमनर्थकं स्यात्। उष्णस्पर्शादिनाऽंशतः सिद्धसाधनवारणायातीन्द्रियेति। न च ततएव प्रतिबन्धकाभाव-वारणे भावपदवैयर्थ्यं, भट्टमतेऽनुपलब्धिगम्यतया तस्यातीन्द्रियत्वात्, दुरदृष्टादिप्रतिबन्धकाभावस्यातीन्द्रियत्वाच्च। यथाकथञ्चित् संबन्धि-तयाऽदृष्टेनैवार्थान्तरवारणाय धर्म्मपदं, न हि तदन्यधर्म्मस्तदनाश्रि-तत्वादित्याहुः।

(२) यद्वेति न च प्रतिबन्धकाभावमादाय भट्टमतेऽर्थान्तरं, धर्म्मपदस्य भावपरत्वादिति वदन्ति।

| | | |
|---|---|---|
| Narada Puncharatna, Fasc. IV .. .. .. | Rs. 0 | 6 |
| Pariśishṭaparvan (Sans.) Fasc. I—IV @ /6/ each .. .. | 1 | 8 |
| Pingala Chhandaḥ Sútra, (Sans.) Fasc. II—III @ /6/ each .. .. | 0 | 12 |
| Prithiráj Rásau, (Sans.) Fasc. I—VI @ /6/ each .. .. | 2 | 4 |
| Ditto (English) Fasc. I .. .. .. .. | 0 | 12 |
| Páli Grammar, (English) Fasc. I and II @ /6/ each .. .. | 0 | 12 |
| Prákṛita Lakshaṇam, (Sans.) Fasc. I .. .. .. | 1 | 8 |
| Parásara Smṛiti (Sans.) Fasc. I—VII @ /6/ each .. .. | 2 | 10 |
| Paráśara, Institutes of (English) .. .. .. .. | 0 | 12 |
| S'rauta Sútra of Ápastamba, (Sans.) Fasc. I—XII @ /6/ each .. | 4 | 8 |
| Ditto Áśvaláyana, (Sans.) Fasc. I—XI @ /6/ each .. | 4 | 2 |
| Ditto Láṭyáyana (Sans.) Fasc. I—IX @ /6/ each .. | 3 | 6 |
| Ditto Sánkháyana (Sans.) Fasc. I—VI @ /6/ each .. | 2 | 4 |
| Sáma Veda Saṃhitá, (Sans.) Vols. I, Fasc. 1—10; II, 1—6; III, 1—7; IV, 1—6; V, 1—8, @ /6/ each Fasc. .. .. .. | 13 | 14 |
| Sáhitya Darpaṇa, (English) Fasc. I—IV @ /6/ each .. .. | 1 | 8 |
| Sánkhya Aphorisms of Kapila, (English) Fasc. I and II @ /6/ each .. | 0 | 12 |
| Sarva Darśana Sangraha, (Sans.) Fasc. II .. .. .. | 0 | 6 |
| Sankara Vijaya, (Sans.) Fasc. II and III @ /6/ each .. .. | 0 | 12 |
| Sánkhya Pravachana Bháshya, Fasc. III (English preface only) .. | 0 | 6 |
| Sánkhya Sára, (Sans.) Fasc. I .. .. .. .. | 0 | 6 |
| S'ri Bháshyam, Fasc. I .. .. .. .. .. | 0 | 6 |
| Suśruta Saṃhitá, (Eng.) Fasc. I and II @ /12/ each .. .. | 1 | 8 |
| Taittiríya Áraṇya Fasc. I—XI @ /6/ each .. .. .. | 4 | 2 |
| Ditto Bráhmaṇa (Sans.) Fasc. II—XXIV @ /6/ each .. .. | 8 | 10 |
| Ditto Saṃhitá, (Sans.) Fasc. II—XXXIV @ /6/ each .. .. | 12 | 6 |
| Ditto Prátiśákhya, (Sans.) Fasc. I—III @ /6/ each .. .. | 1 | 2 |
| Ditto and Aitareya Upanishads, (Sans.) Fasc. II and III @ /6/ each | 0 | 12 |
| Táṇḍyá Bráhmaṇa, (Sans.) Fasc. I—XIX @ /6/ each .. .. | 7 | 2 |
| Tattva Chintámaṇi, Fasc. I—X (Sans.) @ /6/ each .. .. | 3 | 12 |
| Tul'sí Sat'saí, Fasc. I .. .. .. .. .. | 0 | 6 |
| Uttara Naishadha, (Sans.) Fasc. III—XII @ /6/ each .. .. | 3 | 12 |
| Uvásagadasáo, Fasc. I—IV @ /12/ .. .. .. | 3 | 0 |
| Varáha Purána, Fasc. I—VII @ /6/ each .. .. .. | 2 | 10 |
| Váyu Puráṇa, (Sans.) Vol. I, Fasc. I—VI; Vol. II, Fasc. I—VII, @ /6/ each Fasc. .. .. .. .. .. | 4 | 14 |
| Vishṇu Smṛiti, (Sans.) Fasc. I—II @ /6/ each .. .. | 0 | 12 |
| Vivádaratnákara, Fasc. I—VII @ /6/ each .. .. .. | 2 | 10 |
| Vrihannáradiya Purána, Fasc. I—IV @ /6/ .. .. .. | 1 | 8 |
| Yoga Sútra of Patanjali, (Sans. & English) Fasc. I—V @ /14/ each .. | 4 | 6 |
| The same, bound in cloth .. .. .. .. | 5 | 2 |

### *Arabic and Persian Series.*

| | | |
|---|---|---|
| 'Álamgírnámah, with Index, (Text) Fasc. I—XIII @ /6/ each .. | 4 | 14 |
| Áín-i-Akbarí, (Text) Fasc. I—XXII @ 1/ each .. .. | 22 | 0 |
| Ditto (English) Vol. I (Fasc. I—VII) .. .. .. | 12 | 4 |
| Akbarnamah, with Index, (Text) Fasc. I—XXXVII @ 1/ each | 37 | 0 |
| Bádshábnámah with Index, (Text) Fasc. I—XIX @ /6/ each .. | 7 | 2 |
| Beale's Oriental Biographical Dictionary, pp. 291, 4to., thick paper, @ 4/12; thin paper .. .. .. .. .. | 4 | 8 |
| Dictionary of Arabic Technical Terms and Appendix, Fasc. I—XXI @ 1/ each .. .. .. .. .. .. | 21 | 0 |
| Farhang-i-Rashídí (Text), Fasc. I—XIV @ 1/ each .. .. | 14 | 0 |
| Fihrist-i-Ṭúsí, or, Ṭúsy's list of Shy'ah Books, (Text) Fasc. I—IV @ /12/ each .. .. .. .. .. | 3 | 0 |
| Futúḥ-ul-Shám Waqidí, (Text) Fasc. I—IX @ /6/ each .. .. | 3 | 6 |
| Ditto Ázádí, (Text) Fasc. I—IV @ /6/ each .. .. | 1 | 8 |
| Haft Ásmán, History of the Persian Mansawi (Text) Fasc. I .. | 0 | 12 |
| History of the Caliphs, (English) Fasc. I—VI @ /12/ each .. | 4 | 8 |
| Iqbáinámah-i-Jahángirí, (Text) Fasc. I—III @ /6/ each .. | 1 | 2 |
| Iṣabáh, with Supplement, (Text) 49 Fasc. @ /12/ each .. .. | 36 | 12 |
| Maásir-ul-Umara, Vol. I, Fasc. I—IX, Vol. II, Fasc. I—IV @ /6/ each | 4 | 14 |
| Maghází of Wáqidí, (Text) Fasc. I—V @ /6/ each .. .. | 1 | 14 |
| Muntakhab-ul-Tawáríkh, (Text) Fasc. I—XV @ /6/ each .. | 5 | 10 |
| Muntakhab-ul-Tawáríkh (English) Vol. II, Fasc. I—IV @ /12/ each .. | 3 | 0 |

(Turn over.)

Muntakhab-ul-Lubáb, (Text) Fasc. I—XIX @ /6/ each .. Rs. 7 2
Mu'ásir-i-'Alamgírí (Text), Fasc. I—VI @ /6/ each .. .. 2 4
Nokhbat-ul-Fikr, (Text) Fasc. I .. .. .. .. 0 6
Nizámí's Khiradnámah-i-Iskandarí, (Text) Fasc. I and II @ /12/ each .. 1 8
Suyúty's Itqán, on the Exegetic Sciences of the Koran, with Supplement, (Text) Fasc. II—IV, VII—X @ 1/ each .. .. .. 7 0
Tabaqát-i-Násirí, (Text) Fasc. I—V @ /6/ each .. .. 1 14
Ditto (English) Fasc. I—XIV @ /12/ each .. .. 10 8
Táríkh-i-Fírúz Sháhi, (Text) Fasc. I—VII @ /6/ each .. .. 2 10
Táríkh-i-Baihaqí, (Text) Fasc. I—IX @ /6/ each .. .. 3 6
Táríkh-i-Fírozsháhí, Fasc. I—III @ /6/ each .. .. .. 1 2
Wis o Rámín, (Text) Fasc. I—V @ /6/ each .. .. .. 1 14
Zafarnámah, Vol. I, Fasc. I—IX, Vol. II. Fasc. I—VIII @ /6/ each .. 6 6

---

## ASIATIC SOCIETY'S PUBLICATIONS

1. ASIATIC RESEARCHES. Vols. VII, IX to XI; Vols. XIII and XVII, and Vols. XIX and XX @ /10/ each .. Rs. 80 0
   Ditto Index to Vols. I—XVIII .. .. 5 0
2. PROCEEDINGS of the Asiatic Society from 1865 to 1869 (incl.) @ /4/ per No.; and from 1870 to date @ /6/ per No.

JOURNAL of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1850 (7), 1851 (7), 1857 (6), 1858 (5), 1861 (4), 1864 (5), 1865 (8), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6) 1886 (8). @ 1/ per No. to Subscribers and @ 1/8 per No. to Non-Subscribers.

*N. B. The figures enclosed in brackets give the number of Nos. in each Volume.*

Centenary Review of the Researches of the Society from 1784—1883 .. 3 0
General Cunningham's Archæological Survey Report for 1863-64 (Extra No., J. A. S. B, 1864) .. .. .. .. .. 1 8
Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., J. A. S. B., 1868) .. .. .. 1 8
Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., J. A. S. B., 1875) .. .. .. .. 3 0
Sketch of the Turki Language as spoken in Eastern Turkestan, Part II, Vocabulary, by R. B. Shaw (Extra No., J. A. S. B., 1878) 3 0
Introduction to the Maithili Language of North Bihár, by G. A. Grierson, Part I, Grammar (Extra No., J. A. S. B., 1880) .. 1 8
Part II, Chrestomathy and Vocabulary (Extra No., J. A. S. B., 1882) .. 3 0

5. Anis-ul-Musharrahin .. .. .. .. 3 0
6 Catalogue of Fossil Vertebrata .. .. .. 2 0
8. Catalogue of the Library of the Asiatic Society, Bengal .. .. 3 8
9. Examination and Analysis of the Mackenzie Manuscripts by the Rev. W. Taylor .. .. .. .. 2 0
10. Han Koong Tsew, or the Sorrows of Han, by J. Francis Davis .. 1 8
11. Iṣṭiláhát-uṣ-Ṣúfíyah, edited by Dr. A. Sprenger, 8vo. .. .. 1 0
12. Ináyah, a Commentary on the Hidayah, Vols. II and IV, @ 16/ each .. 32 0
13. Jawámi-ul-'ilm ir-riyáẓi, 168 pages with 17 plates, 4to. Part I .. 2 0
14. Khizánat-ul-'ilm .. .. .. .. 4 0
15. Mahábhárata, Vols. III and IV, @ 20/ each .. .. .. 40 0
16. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I—III, with 8 coloured Plates, 4to. @ 6/ each .. .. 18 0
17. Puraṇa Sangraha, I (Markandeya Purana), Sanskrit .. .. 1 0
18. Sharaya-ool-Islam .. .. .. .. 4 0
29. Tibetan Dictionary by Csoma de Körös .. .. .. 10 0
20. Ditto Grammar " " .. .. .. 8 0
11. Vuttodaya, edited by Lt.-Col. G. E. Fryer .. .. .. 2 0

---

Notices of Sanskrit Manuscripts, Fasc. I—XXII @ 1/ each .. .. 22 0
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra .. .. 5 0

N.B. All Cheques, Money Orders &c. must be made payable to the "Treasurer Asiatic Society" only.

